॥ श्रीः ॥

यजुर्वेदीयमाध्यन्दिन शाखाध्यायिनाम् ॥

# उपाकर्मपद्धतिः ।



लेखक—

श्री लक्ष्मीनारायण गोस्वामी

# उपाकर्म सामग्री

—<>०<>—

श्री फलौ २
पुंगीफलानि २५
चन्दन
=) कर्पूर
—)। ताम्बूल
—) केशर
कुशा १ गड्डी
तिल कृष्ण S=
तन्दुलS=
यव S=
दुग्ध S।—
दधि S=
घृत S=
गोमूत्र
गोमय ( गोवर )
भस्महृवनस्य
अपामार्गः ( ओंगा )
दूर्वा (हरी घास )
फूल, फूलमाला, विल्वपत्र
ऋतुफलानि
सुगन्धित तैल
वस्त्रं (धोती, दुपट्टा, अँगोछे)
१ १ २

नैवेद्यं
दक्षिणाद्रव्यम्
यज्ञोपवीतानि
पंचपात्राचमनीये
कर्मपात्रम् (ताँबे का कटोरा)
चन्दनार्थे पात्रम्
कमण्डलुम् ( लोटा )
आसनम् कंवलादि
गङ्गाजलम्
तुलसीदलानि
शर्करा S।
—) मधु (शहद)
)।। धूप
दीपार्थेपात्रम्
( ऋषिपूजनार्थे ) पीठम्
शालग्राममूर्ती-
सिंहासनसहितम्
)।। कलावा
)।। आमले
रुई
दीपशलाका (दीयासलाई )
ताम्रकलशम्सपिधानम्
कुशासनम्।

॥ श्रीः ॥

शुक्लयजुर्वेदीयमाध्यन्दिन वाजसनेयिनाम्

# उपाकर्मपद्धतिः ।

आगरा नगरस्थ श्रीविद्या-धर्म्म-वर्द्धिनी पाठशालायाः
भू० पू० कर्मकाण्ड यजुर्वेदाध्यापकेन

विद्याभूषण कर्म्मकाण्डमणि उपाधिधारिणा अयोध्यास्थ
पण्डित परिषद् समितेः कर्मकाण्ड विषयपरीक्षकेन
श्री लक्ष्मीनारायण गोस्वामिना संकलिता तथा
श्री घनश्याम गोस्वामिना संपादिता

सा च

वन्शीधर दुर्गादत्त फर्माध्यक्ष
वैजनाथ व्रजकिशोर भक्ताभ्यां नवलगढ़ निवासिभ्यां

निजव्ययेन मुद्रयित्वा प्रकाशिता
सम्वत् २००६ सन् १९४९ ई०

विनामूल्य वितरित

| | | |
|---|---|---|
| क्रमागत संख्या ३१००० पंचमवार १०००० | प्राप्तिस्थानम् | वन्शीधर प्रेमसुखदास तेल मिल माईथान, आगरा । |

मुद्रक—जगदीशप्रसाद, एम. ए. बी. कॉम,
एज्यूकेशनल प्रेस, आगरा ।

॥ श्रीः ॥

इस बात को सब ही जानते हैं कि 'श्रावणी कर्म' तथा 'रक्षाबन्धन' श्रावण शुक्ला १५ पूर्णिमा को होता है। यह द्विजातिमात्र का मुख्य कर्म है, इसलिये यह सब को आवश्यक कर्त्तव्य है। जब श्रावण शुक्ला १५ के दिन संक्रान्ति वा ग्रहण होता है तब यजुर्वेदियों को श्रावण शुक्ला ५ को श्रावणाकर्म करना चाहिये; जैसा कि स्मृतिमहार्णव में लिखा है:—

संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत्।
उपाकृतिस्तु पञ्चम्यां कार्यावाजसनेयिभिः॥

और जो पहले-ही-पहले श्रावणीकर्म अर्थात् उपाकर्म करे उसको अधिकमास तथा शुक्रास्त देख लेना आवश्यक है, अन्य के लिये कोई आवश्यकता नहीं है; जैसा कि रेणुका दीक्षितकारिका में लिखा है:—

संक्रान्तौ ग्रहणे चैव सूतके मृतकेऽपि वा।
गणस्नानं न कुर्वीत नारदस्य वचो यथा॥

( गणस्नानशब्देनोत्सर्गाख्यंकर्म )

वर्षा ऋतु में नदियाँ रजस्वला हो जाती हैं अतः इन दिनों नदी में स्नान करना मना है, परन्तु उपाकर्म के लिये दोष नहीं है॥ यथा:—

उपाकर्मणिचोत्सर्गे प्रेत स्नाने तथैव च।
चन्द्र सूर्य ग्रहे चैव रजोदोषो न विद्यते॥

भद्रा में श्रावणी अर्थात् सलूनों और होली नहीं करनी चाहिए, जैसे:—

भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा।
श्रावणी नृपतिं हंति राष्ट्रं दहति फाल्गुनी॥

उक्त बातों पर विचार कर यह शुभ-कर्म द्विजातिमात्र को करना परमावश्यक है।

श्रावण शुक्ला १५
सं० २००६ वि०

निवेदक—
वैद्यनाथ भगत,

॥ श्रीः ॥

शुक्लयजुर्वेदीय माध्यन्दिन वाजसनेयिनाम्

# उपाकर्मपद्धतिः ।



अलिकुलवृतगंडंभालशालीन्दुखंडं गलमिहदहितुंडंभूरिसिंदूरशुंडं।
भजदघिगतपंडं सर्वदेवप्रचंडं पृथुललितपिंडं नौमि तं वक्रतुंडम्॥

ध्यात्वा गुरुपदाम्भोजं लक्ष्मीनारायणो बुधः ।
उपाकर्मपद्धतिं तु कुरुते विदुषांमुदे ॥

तत्र तावत् संशुद्धः सङ्गृहीतसामग्रीकः कर्ता यथासम्भवं समुचितं जलाशयमुपपद्येत । तत्र च कृताञ्जलिः प्रवाहाभिमुखः-

ॐतीर्थवर्य ! दयासिन्धो ! त्वामहं शरणंगतः । सर्व-स्मादुवृजिनाद्विष्वक् परिपाहि नमोऽस्तुते ॥ त्वमेको जगतां पापपुञ्जविध्वंसने पटुः । समुत्तारय पापेभ्यस्त्वयाद्य शरणागतम् ॥

इति पठेत् । अथ तीर्थं जलेनात्मानं प्रोक्षमाणः ।

ॐ पुनन्तुमा देवजनाः पुनन्तु मनसाधियः । पुनन्तु विश्वाभूतानि जातवेदः पुनिहि मा ॥

इति पठेत् । अथ तीर्थमृत्स्नामादाय ।

ॐअश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे । उद्धृता-ऽसिवराहेण कृष्णेन शतबाहुना ॥ मृत्तिके ब्रह्मपूताऽसि कश्य-

पैनाभिवन्दिता । मृत्तिके ! हर मे पापं यन्मया दुष्कृतं कृतम् ।

इति मन्त्रेणाभिमन्त्र्य ललाटे मृदा तिलकं विधाय हस्तौ पादौ च प्रलिप्य जलमञ्जलिना पञ्चवारं वह्निर्निक्षिप्य स्नात्वा पञ्चगव्यार्थे पात्रे गोमूत्रं निक्षिपन् ॥

ॐ तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥

इति पठेत् । ततस्तस्मिन्नेव पात्रे गोमयं निक्षिपन् ।

ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥

इति पठेत् । ततस्तस्मिन्नेव क्षीरं निक्षिपन् ।

ॐ आप्यायस्वसमेतु ते विश्वतः सोम वृष्ण्यम् । भवावाजस्य सङ्गथे ॥

इति पठेत् । ततस्तस्मिन्नेव दधि निक्षिपन् ।

ॐ दधिक्राव्णोअकारिषञ्जिष्णोरश्वस्यवाजिनः । सुरभिनोमुखाकरत्प्रण आयू ꣳषि तारिषत् ॥

इति पठेत् । ततस्तस्मिन्नेवाज्यं निक्षिपन् ।

ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि । प्रियं देवानामनाधृष्टं देव यजनमसि ॥

इति पठेत् । वस्तानि मेलयन् ।

ॐ देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥

इति पठेत् तदनन्तर मञ्जलौ किञ्चद्किञ्चिद् गृहीत्वा ।

ॐ यन्ममास्थिगतं पापं देहे तिष्ठति यच्च मे । प्राशना-त्पञ्चगव्यस्य दहत्वग्निरिवेन्धनम् ॥

इति पठित्वा त्रिवारं पिवेत् । ततः हस्तौ प्रक्षाल्य स्थले जले च तिष्ठन् सपवित्रो मुक्तांगुष्ठकनिष्ठस्य करस्यांगुष्ठमूले जलं माषमितं निधाय निधाय ।

ॐ केशवाय नमः स्वाहा १, ॐ नारायणाय नमः स्वाहा २, ॐ माधवाय नमः स्वाहा ३, ॐ हृषीकेशाय नमः इत्यनेन हस्तौप्रक्षाल्य ॥ ४ ॥

इति पठंस्त्रिवारमाचम्यांगुष्ठमूलेन मुखं द्वि स्पृष्ट्वा तर्जनी-मध्यमानामिकाभिर्मुखम्, अंगुष्ठतर्जनीभ्यां नासे, अनामिकां-गुष्ठाभ्यां चक्षुषीकर्णौ च अंगुष्ठकनिष्ठिकाभ्यां नाभिम्, पाणि-तलेन हृदयम् संकुचिताग्रेण करेण स्कन्धौ शिरश्च स्पृशेत् । ततः कुशात्रयमादाय तेनानीताभिरद्भिरात्मानं प्रोक्षमाणः ।

ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपिवा ।
यःस्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ ५ ॥

इति त्रिवारं पठेत् । ततः प्राणांस्त्रिराचम्य दक्षिणहस्त-स्यानामिकायां कुशद्वयात्मकं वामहस्तस्यानामिकायां कुशत्र-यात्मकं पवित्रं धार्यमाणः ।

ॐ पवित्रस्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुना-म्यच्छिद्रेण पवित्रेण सूर्यस्यरश्मिभिः ॥ तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम् ॥ ६ ॥

इति पठित्वा हस्तेपुष्पाणि गृहीत्वा। प्रार्थयेत्

ॐ श्रीमन्महागणाधिपतये नमः। श्रीगुरुभ्यों नमः। श्रीसरस्वत्यै नमः। वेदाय नमः। वेदपुरुषाय नमः। कुल-देवताभ्यो नमः। स्थानदेवताभ्यों नमः। ग्रामदेवताभ्यो नमः। सर्वेभ्योदेवेभ्यों नमः। सर्वेभ्यों ब्राह्मणेभ्यों नमो-नमः। अविघ्नमस्तु। ॐ सुमुखश्चैक दन्तश्च कपिलो गज-कर्णकः। लम्बोदरश्च विकटो विघ्ननाशो विनायकः॥ धूम्र केतुर्गणाध्यक्षो भालचन्द्रो गजाननः। द्वादशैतानि नामानि यः पठेच्छृणुयादपि॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा। संग्रामे संकटे चैव विघ्नस्तस्य न जायते। शुक्लांबर-धरं देवं शशिवर्णं चतुर्भुजम्। प्रसन्नवंदनं ध्यायेत् सर्व विघ्नोपशांतये॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः। सर्वविघ्नहरस्तस्मै गणाधिपतये नमः॥ सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके। शरण्ये त्र्यम्बके गौरि नारायणि नमोस्तु ते॥ वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ। अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा। वागीशाद्याः सुमनसः सर्वा-र्थानामुपक्रमे। यन्नत्वाकृतकृत्याः स्युस्तं नमामि गजाननम्। गणनाथं नमस्कृत्य नमस्कृत्य पितामहम्। विष्णुं रुद्रं श्रियं देवीं वन्दे भक्त्या सरस्वतीम्॥ स्थानं चात्र नमस्कृत्य दिन-नाथं निशाकरम्। धरणीगर्भसंभूतं शशिपुत्रं बृहस्पतिम्॥ दैत्याचार्यं नमस्कृत्य सूर्यपुत्रं शनैश्चरम्। राहुं केतुं नम-

स्कृत्य यज्ञारम्भे विशेषतः ॥ शक्रादिदेवताः सर्वा ऋषींश्चैव तपोधनान् । गर्गं मुनिं नमस्कृत्य नारदं पर्वतं तथा ॥ वसिष्ठं मुनिशार्दूलं विश्वामित्रं च गोभिलम् । अगस्त्यं च पुलस्त्यं च दक्षं मित्रं पराशरम् ॥ भरद्वाजं च माण्डव्यं याज्ञवल्क्यं च गालवम्॥अन्ये विप्रास्तपोयुक्ताः। वेदशास्त्र विचक्षणाः । तान्सर्वान् प्रणिपत्याहं शुभकर्म समारभे ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवर श्यामो हृदयस्थो जनार्दनः ॥ अग्रतः श्रीनृसिंहच पृष्ठतो देवकीसुतः । रक्षतां पार्श्वयोर्देवौ भ्रातरौ रामलक्ष्मणौ ॥

संकल्पार्थं द्रव्यंजलं चादाय ।

ॐ—स्वस्तिश्रीमुकुन्दसच्चिदानन्दस्य ब्रह्मणोऽनिर्वाच्य-मायाशक्ति विजृम्भिताविद्यायोगात्काल कर्मस्वभा-वाविर्भूतमहत्तत्त्वोदिताहङ्कारोद्भूतवियदादिपञ्चम-हाभूतेन्द्रियदेवता निर्मितेऽण्डकटाहे, चतुर्दशलोकात्मके, लीलया तन्मध्य वर्त्तिनो भगवतः श्री नारायणस्य नाभिकम-लोद्भूतसकललोकपितामहस्यब्रह्मणःसृष्टिंकुर्वतस्तदुद्धरणाय प्रजापतिप्रार्थितस्य समस्त जगदुत्पत्तिस्थितिलयकारणस्य-जगद्रक्षाशिक्षाविचक्षणस्यप्रणतपारिजातस्यअच्युतानन्त-वीर्य्यस्य श्रीमद्भगवतो महापुरुषस्य अचिन्त्यापरिमित-शक्त्याध्येयमानस्य महाजलौघमध्ये परिभ्रममाणानामनेक-कोटिब्रह्माण्डानामेकतमे ऽव्यक्तमहदहङ्कारपृथिव्यप्तेजो-वाय्वाकाशाद्यावरणैरावृतेऽस्मिन् महतिब्रह्माण्डखण्डेआ-

धारशक्तिश्रीमदादिवाराहदंष्ट्राग्रविराजते, कूर्मानन्तवासुकितक्षककुलिककर्कोटकपद्ममहापद्मशंखाद्यष्टमहानागैर्धृयमाणे-ऐरावतपुण्डरीक वामनकुमुदाञ्जनपुष्पदन्तसार्वभौमसुप्रतीकाष्टदिग्गजप्रतिष्ठितानामतलवितलसुतलतलातलरसातल-महातलपाताललोकानामुपरिभागे, भूर्लोकभुवर्लोकस्वर्लोक महर्लोक जनोलोकसत्यलोकाख्यसप्त लोकानामधो-भागे, चक्रवालशैलमहावलयनागमध्यवर्तिनो महाकाल-महामणिराजशेषस्य सहस्रफणानां मणिमण्डलमण्डिते, दिग्दन्तिशुण्डोत्तम्भिते, अमरावत्यशोकवतीभोगवतीसिद्धवतीगान्धर्ववतीकाञ्च्यवन्त्यलकावतीयशोवतीतिपुण्यपुरीप्रतिष्ठिते, इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानाष्टदिक्पालप्रतिष्ठिते, धरध्रुवाध्वरसोमपाप्रभञ्जनानलप्रत्यूषप्रभासाख्याष्टवसुभिर्विराजिते हरत्र्यंबकरुद्रमृगव्याधापराजितकपालीभैरवशम्भुकपर्दिवृषाकपिबहुरूपाख्यैकादशरुद्रैःसंशोभिते, रुद्रोपेन्द्रसवितृधातृत्वष्टृयमेन्द्रेशानभगमित्रपूषाख्यद्वादशादित्यप्रकाशिते, यमनियमासनप्राणायामप्रत्याहारधारणाध्यान-समाध्यष्टांगनिरतवशिष्ठवालखिल्यविश्वामित्रदक्षकात्यायनकौण्डिन्यगौतमांगिरसपराशरव्यास वाल्मीकशुकशौनक-भरद्वाजसनकसनंदनसनत्कुमारनारदादिमुख्यमुनिभिःपवित्रते, लोकाचलवलयिते, लवणेक्षुरससुरासर्पिर्दधि-क्षीरोदकयुक्तसप्तार्णवपरिवृते, जम्बूप्लक्षशाल्मलिकुश क्रौञ्च-

शाकपुष्कराख्यसप्तद्वीपयुते, इन्द्रकांस्यताम्रगभस्तिनागसौ-
म्यगन्धर्वचारणभारतेतिनवखण्डमण्डिते, सुवर्णगिरिक-
र्णिकोपेतमहासरोरुहाकारपञ्चाशत्कोटियोजन विस्तीर्णभू-
मंडले, अयोध्यामथुरामाया(हरिद्वार)काशीकाञ्च्यवन्तिकाद्वा-
रावतीतिसप्तपुरीप्रतिष्ठिते, महामुक्तिप्रदस्थले, शालग्रामशम्भ-
लनन्दिग्रामेतिग्रामत्रयविराजिते, चम्पकारण्यबदरिकारण्य
दण्डकारण्यार्बुदारण्यधर्मारण्यपद्मारण्यगुह्यारण्यजंबुका-
रण्यविन्ध्यारण्यद्राक्षारण्यनहुषारण्यकामकारण्यद्वैतारण्य
नैमिषारण्यादीनांमध्येसुमेरुनिषधकूटश्रीकूटशुभ्रकूटहेमकूट-
रजतकूटचित्रकूटत्रिकूटकिष्किन्धश्वेताद्रिकूटहिमविंध्याचला-
नां हरिवर्षकिंपुरुष वर्षयोश्च दक्षिणे, नवसहस्रयोजन-
विस्तीर्णे, भरतखण्डे मलयाचलसह्याचलविन्ध्याचलानामु-
त्तरेण स्वर्णप्रस्थचण्डप्रस्थमुक्तिकआवर्तकरमणकमहारम-
णकपाश्चजन्यसिंहललङ्काशोकवत्यलकावतीसिद्धवती गांध
र्ववत्यादिपुण्यपुरीविराजितेनवखण्डोपद्वीपमंडिते, दक्षि-
णावस्थितरेणुकाद्यशूकरकाशीकाञ्ची कालिकालञ्टेश्वर
कालञ्जरमहाकालेतिनवोखरयुते, द्वादश ज्योतिर्लिङ्गगङ्गा
(भागीरथी) गोदावरीक्षिप्रायमुनासरस्वतीनर्मदातापीपयो-
ष्णीचन्द्रभागाकावेरीमन्दाकिनीप्रवराकृष्णावेणीभीमरथीतु-
ङ्गभद्रामलापहा कृतमालाताम्रपर्णीविशालाचीवञ्जुलाचर्मण्व-
तीवेत्रवतीगोमतीविशोकाकौशिकीगण्डकीवासिष्ठी-प्रम-

दाविश्वामित्रीफल्गुनीचित्रकाश्यपीसरयू--सर्वपापहारिणी-करतोयाप्रणीतावज्रावक्रगामिनी सुवर्णरेखाशोणाभवना-शिनीशीघ्रगाकुशावर्त्तिनीब्रह्मानन्दामहि त नयेत्यनेकपुण्य-नदीभिर्विलसिते; ब्रह्मपुत्रसिन्धुनदादिपरमपवित्रजलविरा-जिते ॥ हिमवन्मेरुगोवर्द्धनक्रौञ्चचित्रकूटमहेन्द्रमलय-सह्येन्द्रकीलपारियात्राद्यनेकपर्वतसमन्विते, मतङ्गमाल्यकि-ष्किन्धऋष्यशृङ्गेतिमहानगसमन्विते, अङ्गवङ्गकलिङ्गकाश्मीर काम्बोजसौवीरसौराष्ट्रमहाराष्ट्रमगधनेपालकेरल चोरलपा-ञ्चालगौड़मालवमलयसिंहलद्रविड़कर्नाटकललाटकरहाटवर हाटपानाटपांड्यसारस्वतनिषधमागधान्ध्रदशार्णभोजकुरुगा-न्धारविदर्भविदेहवाह्लीकवर्बरकैकेयकोसलविराट सूरसेनकों-कणकेकटमत्स्यमद्रपारसीकखजूरयावनम्लेच्छजालन्धरेति-सिद्धवत्यन्यदेशविशेषभाषाभूमिपालविचित्रिते, इलावृतकुरुभ-द्राश्वकेतुमालकिंपुरुषरमणकहिरण्यमयादिनवखण्डानांमध्ये, भारतखण्डे, वकुलचम्पकपाटलाब्जपुन्नागजातिकरवीररसा-लकल्हारकेतक्यादिनानाविधकुसुमस्तवकविराजिते, कों कन्तहिरण्यशृङ्गकुब्जार्बुदमणिकर्णीवटशालग्रामसूकरमथुरा गयानिष्क्रमणलोहार्गलपोतस्वामिप्रभासवरीचतुर्दशगुह्यवि लसिते, जम्बूद्वीपेकुरुक्षेत्रादिसमभूमध्यरेखायाःअमुकदिग्भागे कुलमेरोः अमुकदिग्भागेविंध्यस्यदक्षिणेदेशेश्रीशैलस्यवाय-व्यदेशे, कृष्णावेण्योर्मध्यदेशे, मत्स्यकूर्मवराहनृसिंहवामन-

१ कुरुक्षेत्रसेजिस दिशामें हो उसका नाम। २ मेरु उत्तरदिशामेंहै

परशुरामरामकृष्णबुद्धकल्किरितिदशावताराणांमध्येबौद्धावतारेकर्मभूमौगंगादिसरिद्भिःपाविते, एवंनवसहस्त्रयोजनविस्तीर्णेभारतवर्षेनिखिलजनशवनपरमभागवतोचमशौनकादिनिवासिते नैमिषारण्येआर्यावर्तान्तर्गतब्रह्मावर्त्तैकदेशे तदन्तर्गतेमध्यदेशेऽमुकजनपदेगङ्गायाअमुकभागेयमुनाया अमुकभागे प्रयागराजस्यामुकदिग्भागे काशीतोऽमुकदिग्भागे श्रीमन्नारायण नाभिकमलोद्भुतसकलजगत्स्रष्टुः परार्द्ध द्वयजीविनोब्रह्मणो द्वितीये परार्द्धे एकपञ्चाशत्तमे वर्षेप्रथममासे प्रथमपक्षे प्रथमदिवसे तस्य द्वितीययामे तृतीयेमुहूर्ते रथन्तरादिद्वात्रिंशत्कल्पानां मध्ये अष्टमे श्रीश्वेतवाराह कल्पे स्वायम्भुवादिमन्वन्तराणां मध्ये सप्तमेवैवस्वतमन्वंतरे कृतत्रेताद्वापरकलिसंज्ञानां चतुर्णां युगानांमध्ये वर्तमाने अष्टाविंशतितमे कलियुगे तत्प्रथमचरणे श्रीमन्नृपविक्रमार्कात् अमुक१ संख्याके संवत्सरे प्रभवादिषष्ठिसंवत्सराणां मध्ये अमुकनाम्नि२ संवत्सरे दक्षिणायनावलम्बिनि श्रीमार्त्तण्डमण्डलेउत्तरगोलेवर्पर्तौ श्रावणमासे शुक्लपक्षेपूर्णिमायां अमुकवासरे अमुकनक्षत्रे अमुकराशिस्थितेचन्द्रे अमुकराशि स्थिते सूर्येअमुकराशिस्थितेदेवगुरौशेषेषुग्रहेषु यथायथाराशि स्थानस्थितेषुसत्सुएवंग्रहगणविशेषणविशिष्टायांशुभ पुण्यतिथौ

---

१—संवत् की गिनती जो पत्रे में होती है।
२—संवत् का नाम पत्रे से जानना।

अमुकगोत्रोत्पन्नस्यामुकस्य मम इहजन्मनि जन्मान्तरे वा बाल्ययौवनवार्धक्यावस्थासुवाक्पाणिपादपायूपस्थघ्राणरसनाचक्षुःस्पर्शनश्रोत्रमनोबुद्धिभिश्चरित ज्ञाताज्ञातकामाकाममहापातकोपपातकादि सञ्चितानांपापानां, ब्रह्महननसुरापानसुवर्णस्तेयगुरुतल्पगमनतत्संसर्गरूपमहापातकानांबुद्धिपूर्वकाणां मनोवाक्कायकृतानां बहुकालाभ्यस्तानामुपपातकानां च स्पृष्टास्पृष्टसकलीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरण विहिताकरणकर्मलोपजनितानाम् रसविक्रयकन्याविक्रय हयविक्रयगोविक्रयखरोष्ट्रविक्रयदासीविक्रयअजादिपशुविक्रय स्वगृहविक्रयअक्रेयविक्रयपण्यविक्रयजलचरादिजन्तुविक्रयस्थलचरादिविक्रयखेचरादिविक्रयसंभूतानां निरर्थकवृक्षच्छेदन ऋण अनपाकरणब्रह्मस्वापहरण, देवस्वापहरण, राजस्वापहरण, परद्रव्यापहरण, तैलादिद्रव्यापहरण, फलादिहरण, लोहादिहरण, नानावस्तुहरणरूपाणांब्राह्मणनिन्दा, गुरुनिन्दा, वेदनिन्दा, शास्त्रनिन्दा, परनिन्दाऽभक्ष्यभक्षणाभोज्यभोजनाचोष्यचोषणालेह्यलेहनापेयपानपेयापाना स्पृश्यस्पर्शनस्पृश्यास्पर्शनाश्राव्यश्रवणाहिंस्यहिंसनावन्द्यवंदनाचिन्त्यचिन्तनायाज्ययाजनापूज्यपूजनपूज्यपूजाव्यतिक्रमणामातृपितृवत्समतिरस्कारस्त्रीपुरुषप्रीतिभेदनपरस्त्रीगमनविधवागमनवेश्यागमनदासीगमनचाण्डालादिहीनजातिगमनगुदगमनरजस्वलागमनपश्वादिगमनरूपाणांपशुसमानवि-

हरण रूपाणां च कूटसाक्षित्वपैशुन्यवादिमिथ्यापवादम्लेच्छ-
सम्भाषणब्रह्मद्वेषकरणब्रह्मवृत्तिहरणवृत्तिच्छेदनपरवृत्तिहरण-
रूपाणां मित्रवञ्चनगुरुवञ्चनस्वामिवञ्चनासत्यभाषण गर्भ-
पातनाऽन्ताम्बूलचर्वणहीनजातिसेवनपरान्नभोजनगणान्नभो-
जनलशुनभक्षणपलाण्डुभक्षणगृञ्जनभक्षणतालवृक्षफलभक्ष-
णोच्छिष्टभक्षणपर्युषितान्नभक्षणाश्वमार्जारकाकगोप्रभृत्युच्छि-
ष्टोच्छिष्टान्तरभक्षणादिरूपाणां पङ्क्तिभेदकरणब्रूणहिंसा-
पक्षिहिंसापिपीलकादिजन्तुहिंसापशुहिंसाबालहिंसाद्यनेकहिं-
सोद्भूतानां शौचत्यागस्नानत्यागसन्ध्यात्यागोपासनाग्नि-
त्यागवैश्वदेवत्यागरूपाणां निषिद्धाचरणकुग्रामवासब्रह्मद्रोह-
गुरुद्रोहपरद्रोहपितृद्रोहमातृद्रोहपरनिंदात्मस्तुतिदुष्टप्रतिग्रहदुर्ज-
नसंसर्गरूपाणां गोयानवृषभयानमहिषयानगर्दभयानोष्ट्रया-
नाजयानादिदुर्यानारोहणभृत्याभरणस्वग्रामत्यागगोत्रत्याग-
कुलत्यागसमुद्रयात्राविप्राशाभेदनावन्दितआशीर्वादग्रहणप-
तित संभाषणरूपाणां पतितजनपङ्क्तिभोजनहिंसकसङ्गमप्रति-
ज्ञाऽसमर्थनार्थिजनाशाभञ्जनपतितताऽऽपाददुष्कार्यान्तरस-
म्पादितानां नानायोनिष्वद्यावधि कृतानां परभयोत्पादनादि-
प्रकीर्णपातकानामेतत्कालपर्यन्तं सञ्चितानां लघूनां स्थूला-
नां सूक्ष्माणां च पापानां परिहारार्थं तथाऽधीतानामध्यापिता-
नां चाध्यायानां स्थापनविच्छेदक्रोपसदन्तविवृतदुष्ट त-
द्रुतोच्चारितवर्णानां पूर्वसवर्णानां गलोपलम्भितद्रुतोच्चारित-
वर्णानां श्लिष्टवर्णनाविघट्टनादिभिःपठितानां पाठितानां

श्रुतीनां यथातयामत्वं तत्परिहारार्थमष्टत्रिंशदनध्यायाध्ययनं रथ्यासंचरतः शूद्रस्य म्लेच्छान्त्यजादेर्वा शृण्वतोऽध्ययने अशुचिदेशेऽध्ययने आत्मनोऽशुचित्वेऽध्ययनेऽक्षर-स्वरानुस्वारपदच्छेदकण्डिकाध्यज्ञनह्रस्वदीर्घप्लुतकण्ठतालुमूर्द्धन्योष्टदन्त्यनासिकानुनासिकरेफजिह्वामूलीयोपध्मानीयोदात्तानुदात्तस्वरितादीनां व्यत्ययेनोच्चारणे माधुर्याक्षर-व्यक्तिहीनत्वाद्यनेकप्रत्यवायपरिहारपूर्वकं सर्वस्यवेदस्य-सवीर्य्यत्व सम्पादन द्वारायथावत्फलप्राप्त्यर्थं श्रीपरमेश्वर प्रीत्यर्थं सशिष्यः सयजमानो देवब्राह्मणसवितृसूर्य्यनारायणसन्निधौ (यमुनायां) गंगाभागीरथ्याममुकतीर्थे वा प्रवाहाभिमुखं शुक्लयजुर्वेदोत्सर्गोपाकरणमहं करिष्ये ।

इति पठित्वोत्सृजेत् । ततः जलमादाय—

ॐ उरुᳯहीत्यस्य शुनश्शेपऋषिर्वरुणोदेवता त्रिष्टुप्छन्दो जलाभिमन्त्रणे विनियोगः । ततो जलं सम्पुटीकृत्यः—

"ॐउरुᳯहि राजावरुणश्चकारसूर्य्याय पन्थामन्वेतवाऽउ । अपदेपादाप्रतिधातवेकरुतापवक्ताहृदयाविधश्चित् । नमो वरुणायाभिष्ठितो व्वरुणस्य पाशः ।

ततःक्षिपेत् जलं पुनरादाय—

"ॐयेते शतमित्यस्य वामदेवऋषिर्वरुणसवितृविष्णुविश्वमरुत्स्वर्कादेवतास्त्रिष्टुप्छन्दस्तोयावर्त्तने विनियोगः॥"

इति क्षिपेत् । ततःजलं दक्षिणावर्त्तमालोडयन्—

ॐ येते शतं वरुण ये सहस्त्रं यज्ञियाः पाशावितता-महान्तः। तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा। इति पठेत्। ततः जलमादाय।

ॐ सुमित्रियान इति मन्त्रस्य प्रजापति ऋषिः आपो देवता यजुर्मार्जने विनियोगः। ॐ सुमित्रियानऽआपऽओष-धयः सन्तु॥ इत्यात्मानम्मार्ज्जयित्वाऽञ्जलिं नोदकमादाय।

ॐ दुर्मित्रियेत्यस्य प्रजापति ऋषिरापोदेवता द्वेष्य-नाशार्थं जलक्षेपणे विनियोगः॥ इति क्षिपेत्। पुनस्तथैवा-ञ्जलिनोदकमादाय शत्रून् कामादीन् वा मनसोद्दिश्य—

ॐ दुर्मित्रियास्तस्मै सन्तु॥ इति प्रथमवारम्— "योऽस्मान्द्वेष्टि" इति द्वितीयवारम् "यं च वयं द्विष्मः"॥ इति तृतीयवारमञ्जलिम् तीरे निक्षिप्य जलं स्पृशेत्। तदनं-तर तीर्थाभिमुखः साञ्जलिस्तिष्ठन्।

ॐ नमोऽस्तु देवदेवाय शितिकंठाय वेधसे। रुद्राय चापहस्ताय दण्डिने चक्रिणे नमः॥ सरस्वती च गायत्री वेदमाता गरीयसी। सन्निधात्री भव त्वं च सर्व-पापप्रणाशिनी॥ त्वं राजासर्वतीर्थानां त्वमेवजगतःपिता अनुज्ञांदेहि मे स्नातुं सर्वपापापनुत्तये॥ सागरस्वननिर्घोष-दण्ड हस्त सुरान्तक। तीक्ष्णदंष्ट्र महाकाय कल्पान्तदह-नोपम। भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि॥ आपस्त्व-मसि देवेश ज्योतिषां पतिरेव च। पापंनाशय मे देव वाङ्मनःकायकर्मजम्॥ नमामि गङ्गे तवपादपङ्कजं सुरासुरै-

वेदित दिव्यरूपम् । भुक्तिं च मुक्तिं च ददासिनित्यंभावा-
सारेणसदानराणाम् । उत्तिष्ठन्तु महाभूतायेभूताभूमिवासिनः
भतानामविरोधेन स्नानकर्मसमारभे ।। अपसर्पन्तुतेभूता ये
भूतास्तीर्थदूषकाः।। येभूताविघ्नकर्तारस्ते नश्यन्तुशिवाज्ञया
पुष्कराद्यानितीर्थानि गंगाद्याः सरितस्तथा ।। आगच्छन्तु
पवित्राणि स्नानकाले सदामम ।। अपामधिपतिस्त्वंचतीर्थे-
षुवसतिस्तव । वरुणाय नमस्तुभ्यं स्नानानुज्ञां प्रयच्छमे ।
अधिष्ठात्र्यश्चतीर्थानां तीर्थेषुविचरन्तियाः ।। देवतास्ताः
प्रयच्छन्तुस्नानाज्ञांममसर्वदा ।। गंगे च यमुनेचैव गोदावरि
सरस्वति ।। नर्मदेसिन्धुकावेरि जलेऽस्मिन्सन्निधिं कुरु ।।

इत्येतैर्मन्त्रैस्तीर्थं प्रार्थ्य । तत्रत्यां मृत्स्नामादाय—

ॐ अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
उद्धृताऽसि वराहेण कृष्णेन शतबाहुना ।। मृत्तिके ब्रह्म-
दत्ताऽसि कश्यपेनाभिवन्दिता । मृत्तिके हर मे पापं
यन्मया दुष्कृतं कृतम् ।।

इत्यभिमन्त्र्य तस्य भागत्रयं कृत्वा प्रथमभागं वामकरेणा-
दाय दक्षिणकरेण जलमादाय च ।

ॐ इदं विष्णुरित्यस्य मेधातिथि ऋषिर्विष्णुर्देवता
गायत्रीछन्दो मृदनुलेपने विनियोगः ।।

इति जलं त्यजेत् । ततो जलेन लेपन योग्यां मृत्तिकां कृत्वा
वामेन करेण नाभेरधस्तात् कटिप्रदेशे तया लिम्पन् ।

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे स्वाहा ॥

इति पठेत् । ततो मृत्तिकाया द्वितीयभागं वामकरेण आदाय पूर्ववत् दक्षिणकरेण जलमादाय ।

ॐ इदं विष्णुरित्यस्य मेधातिथि ऋषिर्विष्णुर्देवता गायत्रीछन्दो मृदनुलेपने विनियोगः ॥

इति पठित्वा तज्जलं त्यजेत् । ततः मृत्तिकां जलेन लेपनयोग्यां कृत्वा तया वक्षसोऽधस्तात् वामेन करेण वामपार्श्वं दक्षिणेन करेण दक्षिणपार्श्वं लिम्पन् ।

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे स्वाहा ॥

इति पठेत् । ततः तृतीयभागं वामकरेणादाय दक्षिणकरेण जलमादाय ।

ॐ इदं विष्णुरित्यस्य मेधातिथि ऋषिर्विष्णुर्देवता गायत्रीछन्दो मृदनुलेपने विनियोगः ॥

इति पठित्वा जलं त्यक्त्वा मृत्तिकां पूर्ववज्जलेन लेपनयोग्यां कृत्वा वामेन करेण वक्ष उपरिभागं वाम ललाटार्धभागान्तं दक्षिणेन दक्षिणललाटार्धभागान्तं लिम्पन् ।

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे स्वाहा ॥ इति पठेत् । ततो जलमादाय ।

ॐ आपोऽअस्मानित्यस्य प्रजापति ऋषिरापो देवता अत्यष्टिश्छन्दो मज्जनोन्मज्जने विनियोगः ॥

इति पठित्वोत्सृजेत् ततः जले मज्जनोन्मज्जनं कुर्यात्।

ॐ आपोऽअस्मान्मातरः शुन्धयन्तु घृतेननोघृतप्वः पुनन्तु विश्वꣳहिरिप्रं प्रवहन्ति देवी—ॐउदिदाभ्यःशुचिरापूत एमि ॥ इति पठेत्। पुनराचम्य जलमादाय च।

ॐ मानस्तोक इत्यस्य कुत्सऋषिरुद्रोदेवता जगतीछन्दो गोमयानुलेपने विनियोगः ॥

इति क्षिपेत्। ततः गोमयमादाय। (गोवर)

ॐ अग्रभागं चरन्तीनामोषधीनां वने वने। तासां वृषभपत्नीनां पवित्रं काय शोधनम् ॥ तन्मे रोगांश्च शोकांश्च नुद गोमय सर्वदा ॥

इत्यभिमन्त्र्य जलेन सम्मिश्रय तस्य भागत्रयं कृत्वा वामकरेण प्रथमभागं नाभेरधस्तात् द्वितीय भागं वक्षसोऽधस्तात् तृतीय भागं वक्षस उपरिभागं वामेन करेण वामतः दक्षिणेन दक्षिणतः ललाटान्तं लिम्पन् दक्षिणकरेण ललाटादि नाभ्यन्तं वामेनाधोभागं च लिम्पन्।

मानस्तोके तनये मानऽआयुषि मानो गोषु मानोऽअश्वेषुरीरिषः मानो वीरान् रुद्रभामिनो वधीर्हविष्मन्तः सदमि त्वा हवामहे ॥

इति पठेत्। ततःस्नात्त्वाऽऽचामेत ततो जलमादाय।

ॐ इमं मे इत्यस्य शुनःशेप ऋषिर्वरुणो देवता गायत्री छन्दःकुम्भ मुद्रयाऽभिषेके विनियोगः।

इति क्षिपेत्। पुनर्जलमादाय।

ॐ इमं मे वरुण श्रुधीहवमद्या च मृडय। त्वाम-वस्युरा च के।
इति पठित्वा कुम्भमुद्रया शिरोभिषिञ्चेत्। एवं पुरस्तादपि।

ॐ तत्वायामीति मन्त्रस्य शुनःशेप ऋषिर्वरुणो देवता त्रिष्टुप्छन्दोऽभिषेके विनियोगः।

ॐ तत्वायामि ब्रह्मणावन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणे हवोध्युरुश ठं॰ समानऽआयुः प्रमोषीः। पुनः।

ॐत्वन्न इत्यस्य वामदेव ऋषिरग्निवरुणौदेवतेत्रिष्टुप्-छन्दोऽभिषेके विनियोगः। ॐ त्वन्नोअग्ने वरुणस्यविद्वान् देवस्य हेडो अवयासिसीष्टाः। यजिष्ठोवह्नितमःशोशुचानो विश्वा द्वेषा॰ंसि प्रमुमुग्ध्यस्मत्॥ पुनः।

ॐ स त्वन्न इत्यस्य वामदेव ऋषिरग्निवरुणो देवते त्रिष्टुप्छन्दोऽभिषेके विनियोगः। ॐ सत्वन्नोअग्नेवमो-भवोतीनेदिष्ठोऽअस्याऽउषसो व्युष्टौ। अवयक्ष्वनो वरुणठं॰ रराणोव्वीहि मृडीक ठं॰ सुहवो नऽएधि॥ पुनः।

ॐ मापं इत्यस्य प्रजापति ऋषिर्हृदयशूलं देवता त्रिष्टुप्छन्दोऽभिषेके विनियोगः। ॐ मापोमौषधीर्हि ठं॰ सीर्धाम्नो धाम्नोराजंस्ततो वरुण नो मुञ्च॥ यदाहुरघ्न्याऽ इति वरुणेति शपामहे ततो वरुण नो मुञ्च॥ पुनः।

ॐ उदुत्तममित्यस्य शुनः शेप ऋषिर्वरुणो देवता

त्रिष्टुप्छन्दोऽभिषेके विनियोगः। ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यम ठं० श्रथाय। अथावयमादित्यव्रते तवानागसोऽअदितये स्याम ॥ पुनः।

ॐ मुञ्चन्त्वित्यस्याथर्वणो भिषगवन्धु ऋषिरोषधयो देवताऽनुष्टुप्छन्दोऽभिषेके विनियोगः। ॐ मुञ्चन्तुमा शपथ्यादथो वरुण्यादुत। अथो यमस्य पड्वीशात्सर्वस्माद्देवकिल्विषात् ॥ पुनः।

ॐ अवभृथ इत्यस्य प्रजापतिर्ऋषिर्यज्ञोदेवताऽनुष्टुप्छन्दोऽभिषेके विनियोगः। ॐ अवभृतनिचुम्पुण निचेरुरसिनिचुम्पुणः। अवदेवैर्देवकृतमेनोयासिषमवमर्त्यैर्मर्त्यकृतं पुरुराव्णो देवरिषस्पाहि।

इति कुम्भसमानया हस्तयाऽऽत्मानं मार्जयेत्। पुनः स्नायात्। ततोभस्मं गृहीत्वा जलेन लेपनयोग्यांकृत्वा ललाटादितिलकोचितमङ्गंलिम्पन्।

ॐ अग्निरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं ठं० हवा इदं भस्म मनऽएतानि चक्षूंषि भस्मानि। इति मन्त्रेण वा।

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव वन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥ इति मन्त्रेण वा

ॐ प्रसद्य भस्मना योनिमपश्च पृथ्वीमग्ने। स ठं० सृज्यमातृभिष्ट्वं ज्योतिष्मान्पुनरासदः।

इति पठेत् । तदनन्तरं स्नात्वाऽऽचम्य ।

ॐ कारस्य ब्रह्मा ऋषिः परमात्मा देवता गायत्री-छन्दः पावने विनियोगः ।

ततः कुशत्रयानीतजलेन नाभेर्दक्षिणपार्श्वतः मूर्धान्तम् सिञ्चन् मूर्ध्नातः नाभेर्वामपार्श्वान्तमात्मानं पावयेत । तत्र क्रमो यथा—

ॐ इमम्मे वरुणश्रु धीहवमद्या च मृडय । त्वामवस्यु-राचके ॐ पुनातु ॥ ॐ सप्तमहाव्याहृतीनां प्रजापतिर्ऋषि-रग्निवायुसूर्योदेवता गायत्र्युष्णिगनुष्टु भश्छन्दांसि पावने विनियोगः । ॐ तत्वायामि ब्राह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेड़मानो व्वरुणेहवोध्युरुशठं० समान आयुःप्रमोषीः ।। ॐ भूः पुनातु । ॐ त्वंनो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसीष्ठाः । यजिष्ठोवह्नि तमः शोशुचानो विश्वाद्वेषा ठं० सि प्रमुमुग्ध्यस्मत् । ॐ भुवः पुनातु । ॐ सत्वं नोअग्नेऽवमो भवोतीनेदिष्टो अस्या उपसोव्युष्टौ । अवयत्त्वनो वरुण ठं० रराणोव्वीहि मृडीक ठं० सुहवो न एधि ॥ ॐ स्वः पुनातु ॥ ॐ मापो-मौषधीर्हिंठं० सीर्धाम्नोधाम्नो राजंस्ततो वरुण नो मुञ्च । यदाहुरघ्न्या इति वरुणेति शपामहेततो वरुण नो मुञ्च । ॐमहः पुनातु । ॐउदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमठं०श्रथाय । अथावयमादित्यव्रतेतवानागसो अदि-तये स्याम ॥ ॐजनः पुनातु । ॐ मुञ्चन्तु माशपथ्या-

दृथों वरुणयादुत। अथोयमस्यपड्वीशात्सर्वस्माद्देवकिल्वि पात्॥ ॐआपः पुनातु॥ ॐअवभृथनिचुं पुणनिचेरुरसि-निचुंपुणः। अवदेवैर्देवकृतमेनोयासिषमवमर्त्यैर्मर्त्यकृत पुरुराव्णो देवरिषस्पाहि। ॐसत्यं पुनातु॥

ततोऽञ्जलिनाजलमादाय।

ॐ तत्सवितुरित्यस्यविश्वामित्र ऋषिः सविता देवता गायत्री छन्दः पावने विनियोगः। ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो योनः प्रचोदयात् ॐसर्वंपुनातु ॐआपो हिष्ठेति तिसृणां सिन्धुद्वीपऋषिरापोदेवता गायत्र छंदःपावनेविनियोगः ॐ आपोहिष्ठामयो भुवस्तानऽऊर्ज्जे-दधातन। महेरणाय चक्षसे। ॐ यो वःशिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः। ॐ तस्माऽअरंगमामवो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः॥ ॐपुनातु। ॐइदमित्यस्य प्रजापतिऋषिरापोदेवता महापङ्क्तिश्छन्द पावने विनियोगः। ॐ इदमापः प्रवहतावद्यं च मलञ्च यत्। यच्चाभि दुद्रोहानृतं यच्च शेपेऽभीरुणम्। आपोमा तस्मादेनसः पवमानश्च मुञ्चतु। ॐपुनातु। ॐहविष्मतीरि-त्यस्य प्रजापतिऋषिर्लिंगोक्तादेवता अनुष्टुपछन्दः पावने विनियोगः। ॐहविष्मतीरिमाऽआपो हविष्मां २ आविवा-सति। हविष्मान् देवो अध्वरो हविष्मां २ ऽअस्तु सूर्य्यः ॐ पुनातु॥ ॐदेवीराप इत्यस्य प्रजापतिऋषिरापोदेवता

पंक्तिश्छन्दः पावने विनियोगः । ॐ देवीरापोऽअपान्नपाद्यो-
वऽऊर्मिर्हविष्यऽइन्द्रियावान् मदिन्तमः । तं देवेभ्योदेवत्राद-
त्तशुक्रपेभ्योयेपाम्भागस्थ स्वाहा ॥ ॐपुनातु ॥ कार्षिरसी-
त्येषां त्रयाणां प्रजापतिर्ऋषिःकार्षिरसीत्यस्य चतुष्टयस्याज्यं
देवता समुद्रस्येत्यस्यापोदेवता अनुष्टुप्छन्दः पावने विनि-
योगः । ॐ कार्षिरसि समुद्रस्य त्वा क्षित्या उन्नयामि ।
समापोअद्भिरग्मतसमोषधी भिरोषधीः । ॐपुनातु । ॐ
अपोदेवा इत्यस्य वरुणऋषिरापो देवतास्त्रिष्टुप्छन्दः
पावने विनयोगः । ॐ अपोदेवा मधुमतीरगृभ्ण-
न्नूर्जस्वतीराजस्वश्चितानाः । याभिर्मित्रावरुणावभ्यषिञ्च
न्याभिरिन्द्रमनयन्नत्यरातीः ।ॐ पुनातु । ॐद्रुपदादिवेत्यस्य
प्रजापत्यश्वि सरस्वत्य ऋषय आपोदेवता अनुष्टुपछन्दःपावने
विनियोगः । ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो
मलादिव । पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥ ॐ
पुनातु । ॐ शन्नोदेवीत्यस्य सिन्धुद्वीप ऋषिर्गायत्रीछन्दः
आपोदेवता पावने विनियोगः । ॐ शन्नोदेवीरभिष्टयआपो
भवन्तु पीतये । शंय्योरभिस्रवन्तु नः ॥ ॐपुनातु । अपा-
ꣳरसमित्यस्य बृहस्पतिर्ऋषीरसोदेवताऽनुष्टुप्छन्दः पावने
विनियोगः । ॐअपाꣳरसमुद्वयसꣳ सूर्य्ये सन्तꣳ समाहि-
तम् । अपाꣳ रसस्ययोरसस्तम्वोगृह्णाम्युत्तममुपयामगृहीतो
सीन्द्राय त्वा जुष्टं गृह्णाम्येपते योनिरिंद्राय त्वा जुष्टतमम् ॥-

ॐपुनातु । ॐ आपोदेवीरित्यस्य सिन्धुद्वीपऋषिरापोदेवता न्यङ्कुसारिणी बृहतीछन्दः पावने विनियोगः । ॐ आपोदेवीरुपसृज मधुमतीरयक्ष्मायप्रजाभ्यः । तासामास्थानादुज्जिहतामोषधयःसुपिप्पलाः । ॐपुनातु ॥ ॐपुनन्तुमेत्यस्य प्रजापतिर्ऋषिःपितरो देवता अनुष्टुप्छन्दःपावने विनियोगः । ॐ पुनन्तुमा पितरः सोम्यासः पुनन्तु मा पितामहाःपुनन्तु प्रपितामहाः । पवित्रेण शतायुषा ॥ ॐ पुनातु । ॐ पुनन्तु मा पितामहा इत्यस्य प्रजापतिर्ऋषिः पितरोदेवता अनुष्टुप्छन्दः पावने विनियोगः । ॐ पुनन्तुमा पितामहाः पुनन्तु प्रपितामहाः। पवित्रेणशतायुषा विश्वमायुर्व्यश्नवै॥ॐ पुनातु ॐ अग्न इत्यस्य वैश्वानरऋषिरग्निर्देवताऽनुष्टुप्छन्दःपावने विनियोगः। ॐअग्नऽआयूꣳषिपवसऽआसुवोर्ज्जमिषञ्चन । आरेबाधस्वदुच्छुनाम् ॥ ॐपुनातु । ॐ पुनन्तु मा देवजना इत्यस्य प्रजापतिर्ऋषिर्लिंगोक्तादेवता अनुष्टुप्छन्दः पावने विनियोगः । ॐपुनन्तु मा देवजनाः पुनन्तु मनसा धियः पुनन्तु विश्वाभूतानि जातवेदः पुनीहि मा ॥ ॐ पुनातु । ॐपवित्रेत्यस्य प्रजापतिर्ऋषिरग्निर्देवता गायत्रीछन्दःपावने विनियोगः । ॐ पवित्रेण पुनीहि मा शुक्रेण देवदीद्यत् । अग्नेक्रत्वा क्रतूंरनु॥ ॐपुनातु। ॐ यत्त इत्यस्य प्रजापतिऋषिरग्निर्देवता तृतीयपादस्य ब्रह्मर्षिगायत्रीछन्दः पावने विनियोगः । ॐयत्ते पवित्रमर्च्चिष्यग्ने विततमन्तरा ब्रह्मतेन

पुनातु मा। ॐपुनातु। ॐपवमान इत्यस्य प्रजापतिऋषिः सोमो देवता गायत्रीछन्दः पावने विनियोगः। ॐ पवमानः सोऽअद्यनः पवित्रेण विचर्षणिः। यःपोता स पुनातुमा॥ पुनातु। ॐ उभाभ्यामित्यस्य प्रजापतिर्ऋषिःसविता देवता गायत्रीछन्दः पावने विनियोगः। ॐउभाभ्यां देव सवितः पवित्रेण सवेन च। मां पुनीहि विश्वतः। ॐ पुनातु। ॐवैश्वदेवीत्यस्यप्रजापतिर्ऋषिर्विश्वेदेवा देवतास्त्रिष्टुप्छन्दः पावने विनियोगः। ॐ वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः। तयामदन्तःसधमादेषुवयꣳस्याम पतयोरयीणाम्। ॐपुनातु। तत उदकंस्पृशेत्। पुनःजलमादाय

ॐचित्पतिर्मेत्रयाणां प्रजापतिर्ऋषिश्चित्पतिर्वाक्पतिरित्युभययोः प्रजापतिर्देवता देवीमित्यस्य सविता देवता त्रिष्टुप्छन्दो। यजुःपावने विनियोगः। ॐ चित्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः। तस्यते पवित्रपते। पवित्रपूतस्ययत्कामःपुनेतच्छकेयम्। ॐपुनातु। इत्यूर्ध्वे।

ॐ वाक्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः। तस्यते पवित्रपते पवित्रपूतस्य यत् कामः पुने तच्छकेयम् ॐपुनातु। इति मध्यमे।

ॐ देवोमा सविता पुनात्वच्छिद्रेण पवित्रेणसूर्य्यस्य

रश्मिभिः। तस्यते पवित्रपते पवित्र पूतस्य यत् कामः पुने तच्छकेयम् ॐ पुनातु। इत्यपः।

ॐ चित्पतिर्वाक्पतिर्देवोमा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः तस्यते पवित्रपतेपवित्र-पूतस्य यत्कामः पुनेतच्छकेयम्। ॐपुनातु।

इति सर्वाङ्गं पावयेत्। पुनः—

ॐ त्रिव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभ-श्छन्दांसि अग्निवायु सूर्योदेवता सर्वाङ्गपावने विनियोगः। ॐभूः पुनातु। ॐ भुवः पुनातु। ॐ स्वः पुनातु। ॐमहः पुनातु। ॐजनःपुनातु। ॐतपः पुनातुः। ॐ सत्यं ।। ॐतत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियो योनः प्रचोद-यात्। ॐपुनातु। ॐइमम्मे वरुणः श्रु धीहवमद्या च मृडय। त्वामवस्युराचके। ॐ पुनातु ॐ तत्वायामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानोहविर्भिः अहेडमानो वरुणे हवोद्धयुरुशठं०समानऽआयुः प्रमोषीः। ॐ पुनातु। ॐत्वन्नो-अग्ने वरुणस्य विद्वान् देवस्यहेडो अवयासि सीष्टाःयजिष्ठो वह्नि तमः शोशुचानो विश्वा द्वेषाठंसि प्रमुमुग्ध्यस्मत्-ॐ पुनातु। ॐ सत्वन्नो अग्नेवमो भवोतीनेदिष्टो अस्या-उपसोव्युष्टौ। अवयक्ष्वनो वरुणठं०रराणोव्वीहि मृडीकठं० सुहवोनऽएधि। ॐ पुनातु। ॐ मापोमौषधीहिंठं०सीधाम्नोधा-म्नोराजंस्ततो वरुण नो मुञ्च। यदाहुरघ्न्या इतिवरुणेति

शापामहे ततो वरुण नो मुञ्च । ॐ पुनातु । ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमठं॰ श्रथाय । अथावयमादित्यव्रते तवानागसोऽअदितये स्याम । ॐ पुनातु । ॐ मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत । अथो यमस्य पड्वीशात् सर्वस्माद्देव किल्विषात् । ॐ पुनातु । ॐ अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः अवदेवैर्देवकृतमेनोयासिषमवमर्त्यैर्मर्त्यकृतं पुरुराव्णो देवरिषस्पाहि । ॐ पुनातु ।

इति सर्वाङ्गं कुशैर्मार्जयित्वोत्तरस्यां तान् कुशांस्त्यजेत् ।

ॐ अपाघमित्यस्य शुनःशेप ऋषिर्लिङ्गोक्तादेवता अनुष्टुप्छन्दोऽपामार्गेण ( ओंगा ) मार्जने विनियोगः ।

ततोऽपामार्गेणात्मानं मार्जयेत् ।

ॐ अपाघमपकिल्विषमपकृत्यामपोरपः । अपामार्गत्वमस्मदपदुःष्वप्न्यठं॰ सुव । ॐ पुनातु ।

इति पठित्वात्यजेत् । जलमञ्जलिनाऽऽदाय ।

ॐ काण्डादित्यस्याग्निर्ऋषिः दूर्वेष्टका देवताऽनुष्टुप्छन्दो दूर्वया मार्जने विनियोगः । ॐ काण्डात् काण्डात् प्ररोहन्ती परुपः परुषस्परि । एवानो दूर्वे प्रतनु सहस्रेण शतेन च ॐ पुनातु ।

इति दूर्वया मार्जयित्वा दूर्वामपि तथैव त्यजेत् ।

ॐ ऋतं चेत्यस्याघमर्षणऋषिर्भाववृत्तं देवतमनुष्टुप्छन्दोऽघमर्षणे जपेविनियोगः । इति जलं प्रक्षिप्यजलेऽनुच्छ्वसन्

ॐ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत। त
रात्र्यजायत । ततः समुद्रो अर्णवः। समुद्रादर्णवाद
संवत्सरो अजायत अहोरात्राणिविदधद्विश्वस्य मिषतोव
सूर्या चन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवं च पृ
चान्तरिक्षमथोस्वः ॥

इति त्रिवारमावर्तयेत्। अथ स्नानाङ्गतर्पणम् (तत्र
पूर्वाभिमुखः सन् कुशात्रयं गृहीत्वा एकैकमञ्जलिमेव सज
क्षतं दद्यात्।

ॐब्रह्माद्यो देवास्तृप्यन्ताम् १। ॐ भूर्देवास्तृप्य
१ ॐभुवर्देवास्तृप्यन्ताम् १। ॐस्वर्देवास्तृप्यन्ताम् १
ॐ भूर्भुवः स्वर्देवास्तृप्यन्ताम्।

कण्ठीकृत्वा सयवेन जलेन कायतीर्थेन प्रत्येकं द्विवारं त
येत्। यथा।

ॐसनकादिद्वैपायनान्त्य ऋषयस्तृप्यन्ताम् २। ॐ
भूर्ऋषयस्तृप्यन्ताम् २। ॐ भुवर्ऋषयस्तृप्यन्ताम् २। ॐ
स्वर्ऋषयस्तृप्यन्ताम् २। ॐभूर्भुवःस्वर्ऋषयस्तृप्यन्ताम् २

अपसव्यं कृत्वा पितृतीर्थेन सतिलेन जलेन प्रत्येकं त्रिवा
तर्पयेत् यथा

ॐकव्यवाडनलादयस्तृप्यन्ताम् ३। ॐभूःपितरस्तृ
प्यन्ताम् ३। ॐ भुवः पितरस्तृप्यन्ताम् ३। ॐस्वः पित
स्तृप्यन्ताम् ३। ॐ भूर्भुवः स्वः पितरस्तृप्यन्ताम् ३।

सव्यं कृत्वाऽऽचम्य साक्षतेन जलेन प्रत्येकमेकवारं देवतीर्थेन तर्पयेत् । यथा

ॐ मोदस्तृप्यताम् १ । ॐ प्रमोदस्तृप्यताम् १ । ॐ सुमुखस्तृप्यताम् १ । ॐ दुर्मुखस्तृप्यताम् १ । ॐ अविघ्नस्तृप्यताम् १ ॐ विघ्नकर्ता तृप्यताम् १ । ॐ ब्रह्मादयो- देवास्तृप्यंताम् १ । ॐ गौतमस्तृप्यताम् १ । ॐ विश्वामित्रस्तृप्यताम् १ । ॐ यमदग्निस्तृप्यताम् १ । ॐ वशिष्ठस्तृप्यताम् १ । ॐकश्यपस्तृप्यताम् १। ॐअत्रिस्तृप्यताम् १। ॐ दक्षस्तृप्यताम् १ । ॐ मरीचिस्तृप्यताम् १ । ॐ अङ्गिरास्तृप्यताम् १। ॐ पुलस्त्यस्तृप्यताम् १ । ॐ पुलहस्तृप्यताम् १ ॐक्रतुस्तृप्यताम् १ । ॐप्रचेतास्तृप्यताम् १ । ॐ भृगुस्तृप्यताम् १ । ॐ मनवस्तृप्यन्ताम् १ ॥

अथ मृतपितृककर्तृकं तर्पणम् । अपसव्यं कृत्वा सतिल जलाञ्जलिना पितृतीर्थेन प्रत्येकं वारत्रयं तर्पयेत् । यथा—

अमुकगोत्रा अस्मत्पितृपितामहप्रपितामहा अमुकामुकनामानअपत्नीकसपत्नीकास्तृप्यंताम् ३ । अमुकगोत्रा अस्मत्मातामह प्रमातामह वृद्धप्रमातामहा अपत्नीकसपत्नीकास्तृप्यंताम् ३ ।

पूर्वाभिमुखः सन्सव्येनाचम्य दर्भान् प्रागग्रान् निधाय च सजलाक्षतमञ्जलिमादाय ।

ॐ आब्रह्मस्तम्बपर्य्यन्तं जगत् तृप्यताम् १

इति । अथ दक्षिणाभिमुखोऽपसव्यो भुग्नान् दक्षिणाग्रा
दर्भान् विधाय तिलोदकमादाय पितृतीर्थेन तर्पयेत् ।

ॐ यन्मया दूषितं तोयं मलैः शारीरसम्भवैः तस्य
पापस्य शुद्ध्यर्थं यक्ष्मैतत्ते तिलोदकम् ।

इति पठन् त्रिवारं क्षिपेत् अथ तीरमुपेत्य ।

ॐ अनग्नि दग्धा ये जीवा येऽप्यदग्धाः कुले मम
भूमौदत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥

इति पठंस्त्रिर्निक्षिपेत् । ततः तीरादिस्थलमुपेत्य स्वदक्षि
भागेशिखोदकं विमुञ्चेत् ॥

ॐ लतागुल्मेषु वृक्षेषु पितरो ये व्यवस्थिताः । ते
सर्व तृप्तिमायान्तु मयोत्सृष्टैः शिखोदकैः ॥ इति पठेत् ।

ततः सव्यं कृत्वा पुनः आमलक फल्कं लिप्त्वा, तैलमर्दनं च
कृत्वा स्नात्वाचम्य । ततः तत्रैव वा धौतवाससी परिधाय
दर्भासनादौ प्राङ्मुख उदङ्मुखोवोपविश्य भस्मना गोपी
चन्दनादिना वा तिलकं विधाय सपवित्रपाणिसंयतचित्तो
मध्यान्हसन्ध्यामुपासीत । तत्र क्रमो यथा साक्षतं जलमादाय ।

ॐ तत्सत् ३ श्रीमद्भगवतो ब्रह्मणो द्वितीये परार्द्धे
श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशतितमे कलि-
युगे बौद्धावतारे रामराज्ये भरतखण्डे आर्यावर्ते अमुक-
देशे पुण्यक्षेत्रेऽमुक स्थले अमुकगोत्रोऽमुकःऽहमुपात्त दुरि-
तक्षयद्वारा रुद्रलोकावाप्त्यै मध्याह्नसन्ध्याकर्म करिष्ये ।

इति संकल्प्य गायत्र्या शिखां स्पृशन् [बद्ध्वा]

ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो योनः प्रचोदयात् । इति पठन् । ततः—ऐशान्याभिमुखमाचम्य ।

ॐ केशवाय नमः १ । ॐ माधवाय नमः २ ॥ ॐ नारायणाय नमः ३ । ॐ हृषीकेशायनमः हस्तौ प्रक्षाल्य । ततः ऋतमित्यादिना पुनराचामेत् ।

ॐ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः समुद्रा दर्णवादधि संवत्सरोऽअजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयद्दिवंच पृथिवीं चान्तरिक्षमथो स्वः । ततः सप्रणवगायत्र्याः रक्षांकुर्यात् ।

ॐ कारस्य ब्रह्मा ऋषिर्गायत्रीछन्दः परमात्मा देवता सर्वकर्मारम्भे विनियोगः । ॐ सप्तव्याहृतीनां प्रजापति-विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवशिष्ठकश्यपाऋषयो-ऽग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवता गायत्र्यु-ष्णिगनुष्टुब्बृहतीपङ्क्ति त्रिष्टुब्जगत्यश्छन्दांसिप्राणायामे विनियोगः । ॐ गायत्र्या विश्वामित्रऋषिर्गायत्रीच्छन्दः सविता देवताअग्निर्मुखमुपनयने प्राणायामे विनियोगः । ॐ शिरसः प्रजापतिर्ऋषिस्त्रिपदा गायत्रीछन्दो ब्रह्माग्नि-वायुः सूर्या देवता प्राणायामे विनियोगः ।

ततः सम्मीलितनयनो मौनी प्राणायामत्रयं कुर्यात् । तत्र वायोरादानकाले पूरकनामा प्राणायामः । तत्र श्यामं चतुर्भुजं

विष्णुं नाभौ ध्यायेत्। धारणाकाले कुम्भकस्तत्र कमलास रक्तवर्णं ब्रह्माणं हृदि ध्यायेत्। त्यागकाले रेचकस्तत्र श्वेतव त्रिनेत्रं शिवं ललाटदेशे ध्यायेत्। त्रिष्वप्येतेषु प्रत्ये त्रिर्मन्त्राभ्यासः।

ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः सत्यम् ॐ तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि। धियोयो प्रचोदयात् ॐ आपोज्योतीरसोऽमृतं ब्रह्म भूर्भुवःस्वरोम्

इति ततो जलमादाय।

ॐ आपः पुनन्त्विति विष्णुर्ऋषिरनुष्टुप्छन्दः आपो देवता आचमने विनियोगः।

इति विसृजेत्। अथाचमनार्थञ्जलमादाय।

ॐ आपः पुनन्तु पृथ्वीं पृथ्वी पूता पुनातु माम् पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम्॥ यदुच्छिष्टम-भोज्यञ्च यद्वा दुश्चरितं मम। सर्वं पुनन्तु मामापोऽसतांञ्च प्रतिग्रहं स्वाहा। इत्याचामेत्। ततः

ॐ आपोहिष्ठेत्यादित्र्यृचस्य सिन्धुद्वीप ऋषिर्गायत्री-छंदः आपोदेवता मार्जने विनियोगः।

ॐ आपोहिष्ठामयोभुवः इतिशिरसिकुशोदकं क्षिपेत्।एवमे

ॐ तानऊर्ज्जे दधातनः पादयोः।

ॐ महेरणाय चक्षसे हृदि।

ॐ योवः शिवतमोरसः नाभौ।

ॐ तानऽऊर्जेदधातनः पादयोः ।
ॐ महेरणाय चक्षसे हृदि ।
ॐ योवः शिवतमोरसः नाभौ ।
ॐ तस्य भाजयतेहनः पादयोः ।
ॐ उशतीरिवमातरः शिरसि ।
ॐ तस्माऽअरङ्गमामवः ललाटे ।
ॐ यस्य क्षयाय जिन्वथ हृदि ।
ॐ आपोजनयथा चनः पादयोः ।

ॐ द्रुपदादिवेति कोकिलो राजपुत्रऋषिरनुष्टुपछन्दः आपोदेवता सौत्रामण्यवभृथे विनियोगः । ततः करेण जलमादाय ।

ॐ द्रुपदादिवमुमुचानः स्विन्नःस्नातो मलादिव पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ।

इति त्रिः पठित्वा जलं शिरसि निक्षिपेत् ।

ॐ अघमर्षणसूक्तस्याघमर्षणऋषिरनुष्टुप्छन्दःभाववृत्तं दैवतमश्वमेधावभृथे विनियोगः ।

ततः करेण जलमादाय नासारन्ध्राग्रं कृत्वा वा जले मग्नःसन्

ॐ ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत । ततः समुद्रो अर्णवः। समुद्रादर्णवादधिसम्वत्सरोऽअजायत । अहोरात्राणि विदधद्विश्वस्यमिषतोवशी ।

सूर्य्याचद्रमसौ धाता यथापूर्वमकल्पयद्दिवञ्च पृ
चान्तरिक्षमथो स्वः ।

ततः तज्जलं वामपार्श्वेऽनवलोकयन् भूमौ निक्षिपेत् ।
जलमादाय ।

ॐ अन्तरश्चरसीति मन्त्रस्य तिरश्चीन ऋषिरनुष्टुप्छ
आपोदेवता आचमने विनियोगः । ॐ अन्तश्चरसि भू
गुहायां विश्वतो मुखः । त्वं यज्ञस्त्वं वषट्कार आ
ज्योतीरसोऽमृतम् । इत्याचामेत् ।

तत उत्थाय गंधाक्षत मिश्रितामेकांजलाञ्जलिं सूर्याभिमुखं
ॐ तत्सवितुर्वरेण्यम्भर्गोदेवस्य धीमहि धियो यो
प्रचोदयात् । ॐ रुद्र स्वरूपिणेसूर्यनारायणाय नम ।
मर्घ्यं दत्तं ननम । आकृष्णेनरजसा इति मंत्रेण वा ।

ततः विनियोगेऽनूर्ध्व बाहुरन्यथाऊर्द्ध्वबाहुः सन् सू
वीक्षमाणः उपस्थानं कुर्यात् ।

ॐ उद्वयमित्यस्य हिरण्यस्तूप ऋषिरनुष्टुप्छन्
सूर्यो देवता सूर्योपस्थाने विनियोगः । ॐ उद्वयन्त
मस्परिस्वः पश्यन्तउत्तरं देवं देवत्रा सूर्यमगन्मज्योति
रुत्तमम् । ॐ उदुत्यमित्यस्य प्रस्कण्व ऋषिर्गायत्रीछन्द
सूर्योदेवता सूर्योपस्थाने विनियोगः ॐ उदुत्यं जातवे
देवं वहन्ति केतवः । दृशे विश्वायसूर्य्यम् । ॐचित्रमित्य
कौत्सऋषिस्त्रिष्टुप्छन्दः सूर्योदेवता सूर्योपस्थाने विनि

योगः । ॐ चित्रं देवानामुदगादनीकंचक्षुर्मित्रस्य वरुण-
स्याग्नेः । आप्राद्यावापृथिवी अन्तरिक्षठं॰ सूर्य आत्माजगत-
स्तस्थुषश्च । ॐ तच्चक्षुरित्यस्य दध्यङ्ङाथर्वणऋषिर्त्र्यक्षरा
तीतपुर उष्णिग् छन्दः सूर्योदेवता सूर्योपस्थाने विनियोगः ।
ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतं
जीवेम शरदः शतठं॰ शृणुयाम शरदः शतं प्रब्रवाम शरदः
शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ।

ततः निवेद्यमानमङ्गं स्पृशन् ।

ॐ हृदयाय नमः । ॐ भूः शिरसे स्वाहाः । ॐ भुवः
शिखायै वषट् । ॐ स्वः कवचाय हुँ । ॐ भूर्भुवः नेत्रा-
भ्यां वौषट् ॐ भूर्भुवः स्वः अस्त्राय फट् ।

इति त्रिवारम् पठेत् । पुनः

ॐ कारस्य ब्रह्मा ऋषिर्गायत्री छन्दोऽग्निर्देवता
शुक्लो वर्णः जपे विनियोगः । ॐ त्रिव्याहृतीनां प्रजापति
ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांस्यग्निवायुवादित्या देवता
जपे विनियोगः । ॐ गायत्र्याविश्वामित्रऋषिगायत्रीछन्दः
सविता देवता अग्निर्मुखमुपनयने जपे विनियोगः ।

ॐ सावित्रींयुवतीं शुक्लां शुक्लवस्त्रां त्रिलोचनाम् ।
त्रिशूलिनीं वृषारूढां यजुर्वेदेनसंयुतां ॥
आदित्यमण्डलस्था च रुद्रलोकगताथवा ।
अक्षसूत्रधरादेवि पद्मासनगताशुभा ॥

आगच्छवरदे देवि ! त्र्यक्षरे ब्रह्मवादिनि ।
सावित्रिछन्दसां माता ब्रह्मयोने नमोस्तुते ॥

ॐ तेजोसीति देवा ऋषयः शुक्रं दैवतं गायत्री छन्दोसावित्र्यावाहने विनियोगः । ततः साञ्जलिः

ॐ तेजोसि शुक्रमस्यमृतमसिधामनामासि प्रियं देवानामनाधृष्टं देवयजनमसि । ॐ सावित्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे नमस्ते तुरीयाय दर्शितायपदाय परो रजसे सावदोमाप्रापत् ।

इति प्रार्थयेत् । ततः यथाशक्ति-गायत्रीं जपेत् । ततः साक्षत जलमादाय ।

ॐ तत्सत् ३ अद्य पूर्वोक्तग्रहगण विशिष्टे काले देशे चामुकगोत्रोऽमुकनामाऽहं ममात्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रीसूर्यस्य प्रीत्यर्थमुपस्थानं करिष्ये ।

इत्युच्चार्य जलं क्षिपेत् । ततः जलमादाय ।

विभ्राडित्यस्य विभ्राट् सौर्य्यऋषिः सूर्योदेवता त्रिष्टुप्छन्दः उदुत्यमृत्यृचां प्रस्कण्वऋषिः सूर्योदेवता गायत्रीछन्दः तं [illegible]नथेत्यस्य काश्यपवत्सावृषीसोमोदेवता त्रिष्टुप्छन्दः अयं वेन इत्यस्य वेन ऋषिः सोमोदेवता त्रिष्टुप्छन्दः चित्रमित्यस्य कुत्साङ्गिरसऋषिः सूर्य्योदेवता त्रिष्टुप्छन्दः आन इत्यस्यागस्त्य ऋषिः सूर्य्योदेवता त्रिष्टुप्छन्दः यदद्य त्यस्य श्रुतकक्षावृषी सूर्योदेवता त्रिष्टुप

छन्दवसमहा निविद्वयोर्जंमदग्निर्ऋषिः सूर्य्योदेवता त्रिष्टुप-छन्द आद्यस्य बृहती छन्दो द्वितीयस्य सतो बृहती छन्दः श्रायन्त इवेत्यस्य मेधा ऋषिः सूर्य्योदेवता त्रिष्टुप्छन्दः सूर्य्योपस्थाने विनियोगः ।

इत्युच्चार्य जलं क्षिपेत् । ततः सूर्यं पश्यन् तिष्ठन् ।

ॐ विभ्राड् बृहत् पिबतु सोम्यम्मध्वायुर्दधद्यज्ञपताव-विह्रुतम् । वातजूतोयोऽअभिरक्षतित्मना: प्रजाः पुपोष पुरुधाविराजति ॥ उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् । येनापावकचक्षसा भुरण्यन्तञ्जनां २ अनु । त्वं वरुणपश्यसि । दैव्यावध्वर्यू आगतꣳ रथेन सूर्य्यत्वचा । मद्ध्वा यज्ञꣳ समञ्जाथे । तम्प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदꣳ स्वर्विदम् । प्रतीचीनं वृजनन्दोहसे धुनिमाशुञ्जयन्तमनुयासुवर्धसे ॥ अयं वेनश्चो यदत्पृश्निगर्भा ज्योतिर्जरायूरजसो विमाने । इममपाꣳ सङ्गमे सूर्यस्य शिशुन्न विप्रामतिभी रिहन्ति । चित्रन्देवाना-मुदगादनीकञ्चक्षुर्मित्रस्यव्वरुणस्याग्नेः । आप्राद्यावापृथिवी ऽअन्तरिक्षꣳ सूर्यऽआत्माजगतस्तस्थुषश्च ॥ आनऽइडाभि र्व्विदथे सुशस्तिव्विश्वानरः सवितादेवऽएतु । अपि यथा-युवानो मत्सथानो विश्वञ्जगदभिपित्वे मनीषा ॥ यदद्यकच्च वृत्रहन्नुदगाऽअभिसूर्य सर्वन्तदिन्द्रते वशे ॥ तरणिर्विश्व

दर्शतो ज्योतिष्कृदसिसूर्य । विश्वमाभासि रोचनम् । तत् सूर्यस्य देवत्वन्तन्महित्वम्मध्यकर्त्तोर्विततठं०सञ्जभार । यदेदयुक्तहरितः सधस्थादाद्रात्री व्वासस्तनुतेसिमस्मै ॥ तन्मित्रस्य वरुणस्याभिचक्षे सूर्योरूपं कृणुतेद्योरुपस्थे । अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति । वण्महाँ२ऽअसि सूर्य्य बड़ादित्यमहाँ २ऽअसि । महस्ते सतो महिमापनस्यतेद्धा देव महाँ २ऽअसि । मन्हादेवानामसुर्यःपुरोहितो विभुज्योतिरदाभ्यम्॥ श्रायन्तइव सूर्य्यं विश्वेदिन्द्रस्य भक्षत । व्वसूनि जातेजनमानऽओजसाप्रतिभागनदीधिम ॥ अद्यादेवाउदिता सूर्यस्य निरठं० हसः पिपृतानिरवद्यात् ॥ तन्नोमित्रो वरुणोमामहन्तामदितिः सिन्धुः पृथिवीउतद्यौः॥ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च । हिरण्ययेन सविता रथेन देवो यातिभुवनानि पश्यन् ॥

ततः जलमादाय

ॐसहस्रशीर्षेति षोडशानां नारायण पुरुषऋषिः पंचदशानामनुष्टुप्छन्दः षोडशस्य त्रिष्टुप्छन्दः पुरुषो देवता सूर्योपस्थाने विनियोगः ॥

इत्युच्चार्य्य जलं क्षिपेत् । ततः सूर्य्याभिमुखमूर्ध्ववाहुस्तिष्ठन्

ॐ सहस्रशीर्षापुरुषः सहस्राक्षःसहस्रपात् । सभूमि ठं० सर्वतस्पृत्वाऽत्यतिष्ठद्दशाङ्गुलम् । पूरुष एवेद ठं०सर्वंयद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेना तिरोहति

एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा-
भूतानि त्रिपादस्यामृतन्दिवि ॥ त्रिपादूर्द्ध्व उदैत् पुरुषः
पादोऽस्येहाभवत् पुनः। ततो विष्वङ् व्यक्रामत् साशनानशने-
ऽअभि ॥ ततोविराडजायत विराजो अधिपूरुषः। सजातो-
ऽअत्यरिच्यतपश्चाद्भूमिमथो पुरः ॥ तस्माद्यज्ञात् सर्वहुतः
सम्भृतं पृषदाज्यम् ॥ पशूंस्तांश्चक्रे वायव्यानारण्याग्रा-
म्याश्च ये ॥ तस्माद्यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे।
छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्माद जायत तस्मादश्वा-
अजायन्त ये के चोभयादतः। गावोह जज्ञिरे तस्मात्तस्मा-
ज्जाताअजावयः ॥ तं यज्ञं बर्हिषिप्रौक्षन् पुरुषं व्यदधुः
तेन देवाअयजन्त साध्याऽऋषयश्च ये ॥ य पुरुषं व्यदधुः
कतिधाव्यकल्पयन्। मुखं किमस्यासीत् किं बाहू किमूरू
पादाऽउच्येते ॥ ब्राह्मणोऽस्य मुखमासीत् बाहूराजन्यः
कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्याꣳ शूद्रोऽअजायत।
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। श्रोत्राद्वायुश्च
प्राणश्च मुखादग्निरजायत॥ नाभ्याआसीदन्तरिक्ष ꣳ
शीर्ष्णोद्यौः समवर्त्तत। पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथालोकाँ-
ऽअकल्पयन् ॥ यत् पुरुषेण हविषा देवा यज्ञमतन्वत।
वसन्तोस्यासीदाज्यंग्रीष्मऽइध्मः शरद्धविः ॥ सप्तास्यासन्
परिधयस्त्रिः सप्तसमिधः कृताः। देवायद् यज्ञंतन्वाना-
अबध्नन् पुरुषंपशुम् ॥ यज्ञेन यज्ञमयजन्त देवास्तानि

धर्म्माणि प्रथमान्यासन् । त ह नाकं महिमानः सचंत यत्र पूर्वे साध्याः सन्ति देवाः ॥ ततः जलमादाय ।

यज्जाग्रत इत्यादीनां शिवसंकल्प ऋषिर्मनोदेवता त्रिष्टुप्छन्दः सूर्य्योपस्थाने विनियोगः ॥

इति पठित्वा जलं क्षिपेत् सूर्य्याभिमुखमुत्तिष्ठन् ।

ॐ यज्जाग्रतो दूरमुदैति दैवं तदुसुप्तस्य तथैवैति । दूरंगमं ज्योतिषांज्योतिरेकन्तन्मे मनः शिवसङ्कल्पमस्तु ॥ येन कर्म्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ॥ यदपूर्वं यक्षमन्तः प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु ॥ यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरंतरमृतं प्रजासु । यस्मान्नऽऋते किंचन कर्म्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥ येनेदं भूतंभुवनंभविष्यत् परिगृहीतममृतेन सर्वम् । येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥ यस्मिन्नृचः सामयजूꣳषि यस्मिन्प्रतिष्ठितारथनाभाविवाराः । यस्मिंश्चित्तꣳ सर्वमोतंप्रजानांतन्मे मनः शिवसङ्कल्पमस्तु ॥ सुषारथिरश्वानिव यन्मनुष्यान्नेनीयते भीशुभिर्वाजिनऽइव । हृत्प्रतिष्ठं यदजिरं यविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु ॥ ततः जलमादाय ।

मण्डलब्राह्मणस्य विवस्वानृषिर्वायुर्देवता सूर्य्योपस्थाने विनियोगः ॥

इत्युच्चार्य जलं क्षिपेत् । ततः ऊर्ध्वबाहुः सूर्य्याभिमुखस्तिष्ठन् ।

ॐ यदेतन् मण्डलं तपति तन्महदुक्थं ता ऋचः सऽऋचां लोकोऽथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नांल्लोकोऽथ यऽएषएतस्मिन् मण्डले पुरुषः सोऽग्निस्तानियजू ᳪ षि स यजुषांलोकः ॥ १ ॥ सैषात्रय्येव विद्यातपति तद्धैतदप्यविद्वाᳪ सऽआहुस्त्रयीवा एषा विद्यातपतीति वाग्घैव तत्पश्यंती वदति ॥२॥ सऽएष-ऽएवमृत्युर्यऽएषऽएतस्मिन्मण्डले पुरुषोथैतदमृतं यदेतदर्चि-र्दीप्यते तस्मान् मृत्युर्नम्रियते मृतेह्यं न्तस्तस्मा न्नदृश्यते मृतेह्यं न्तः ॥३॥ तदेष श्लोको भवत्यन्तरंमृत्योरमृतमित्य-वरᳪ᳕ ह्येतन् मृत्योरमृतं मृत्यावमृतमाहितमित्येतस्मिन् हि पुरुषऽएतन्मण्डलं प्रतिष्ठितं तपतिमृत्युर्विवस्वन्तं वस्तइत्यसौ वाऽआदित्यो विवस्वानेष ह्यहोरात्रे विवस्ते तमेष वस्ते सर्वतो ह्येनेनपरिवृतो मृत्योरात्मावैव्विवस्वतीत्येतस्मिन् हि मण्डलऽ एतस्य पुरुषस्यात्मैतदेष श्लोको भवति ॥४॥ तयोर्वाऽएत-योरुभयोरेतस्य चार्चिषऽएतस्य च पुरुषस्यैतन्मण्डलंप्रतिष्ठा तस्मान्महदुक्थंपरस्मै नशᳪ᳕ सेन्नेदेतां प्रतिष्ठां छिनदाऽ-इत्येताᳪ ह सुप्रतिष्ठां छिन्त्तेयो महदुक्थं परस्मै शᳪ᳕ सति तस्मादुक्थशसम्भूयिष्ठं परिचक्षते प्रतिष्ठाछिन्नो हि भवती-त्यधिदैवतम् ॥५॥ अथाधियज्ञम् । यदेतन्मण्डलं तपत्य-यᳪ᳕ सरुक्मोथयदेतदर्चिर्दीप्यतऽइदं तत्पुष्करपर्णमापोह्येताऽ आपः पुष्करपर्णमथ यऽएषऽएतस्मिन्मण्डले पुरुषो यमेवस

योंयर्ठं॰हिरण्मयःपुरुपस्तदेतदेवैत्रयर्ठं॰संस्कृतत्येह्योपधच्चेता
यज्ञस्यैवानुसर्ठं॰स्थामूर्द्ध सुवक्रामतितदेतमप्येतियऽएपतपति
तस्मादग्निनाद्रियेतपरिहंतुमस्तुत्रह्य ए तदाभवतीत्युऽएवाधि-
यज्ञम् ॥ ६ ॥ अथाध्यात्मम् । यदेतन्मण्डलं तपति यश्चै
रुक्मऽइदंतच्छुक्लमचक्षथयदेतदर्चिर्दीप्यतेयच्चैतत्पुष्करपर्णं
मिदंतत्कृष्णमचक्षथ य ऽएपऽएतस्मिन्मण्डले पुरुपो यश्चैप
हिरण्मयः पुरुपोयमेवस यो यं दक्षिणेक्षन् पुरुपः ॥ ७ ॥
सऽएपऽएव लोकं पृणातामेप सर्वोऽग्निरभि सम्पद्यते तस्यै-
तन्मिथुन यों य ठं॰ सव्येक्षन् पुरुपोर्द्ध महैतदात्मनोयन् मिथु
यदा वै सहमिथुनेनाथ सर्वोऽथ कृत्स्नः कृत्स्नतायै सद्यचे
द्वै भवतोद्वन्द्वर्ठं॰हि मिथुनं प्रजननं तस्माद्द्वे द्वे लोकंपृणे-
ऽउपधीयेते तस्मादु द्वाभ्यां द्वाभ्यां चितिंप्रणयन्ति ॥ ८ ॥
सऽएपएवेन्द्रः योयं दक्षिणेक्षन् पुरुपोथेयमिन्द्राणी ताभ्यां
देवाऽएतांविधृतिमकुर्वन्नासिकान्तस्माज्जायायाऽअन्तेनाश्नी
या द्वीर्य्यवान् ह्यस्माज्जायते वीर्य्यवन्तमुह सा जनयति
यस्याऽअन्तेनाश्नाति ॥६॥ तदेतद्देवव्रतर्ठं॰राजन्यबन्धवो
मनुष्याणामनुतमांगोपायंति तस्मादुतेपु व्वीर्य्यवाञ्जायते
मृतवाकाव्वयसार्ठं साक्षि प्रश्येनं जनयति ॥ १० ॥
तौहृदस्याकाशं प्रत्यवेत्य मिथुनीभवतस्तौ यदा मिथुन-
स्यान्तं गच्छतोथहैतत् पुरुपः स्वपिति तद्यथा हैवेदं मानु-
पस्य मिथुनस्यान्तं गत्वा संविदऽइवभवत्येवर्ठं॰ हैवैतदसंवि-

दऽइव भवतिदैवर्ठ०ह्येतन् मिथुनम्परमोह्येपऽआनन्दः ११।
तस्मादेवं व्वित्स्वप्यात् । लोक्यर्ठ०हैतेऽएव तद्देवते मिथुनेन
प्रियेण धाम्ना समर्द्धयति तस्मादुह स्वपन्तं धुरंवन योध-
येन्नेदेते देवते मिथुनीभवन्त्योहि नसानीति तस्मादुहैतत्
सुषुपुषः श्लेष्मणमिव मुखम्भवत्येतेऽएव तद्देवते रेतः
सिञ्चतस्तस्माद्रेतसऽइदर्ठ०सर्वर्ठ०सम्भवति यदिदं किञ्च ।१२।
सऽएषऽएवमृत्युः यऽएषऽएतस्मिन्मण्डले पुरुषो यश्चायं
दक्षिणेचन् पुरुषस्तस्य हैतस्य हृदये पादावति हतौ तौ
हैतदाछिद्योत्क्रामति सयदोत्क्रामत्यथ हैतत् पूरुषो म्रियते
तस्मादुहैतत् प्रेतमाहुराछेद्यस्येति ॥ १३ ॥ एषऽउऽएव-
प्राणः । एष हीमाः सर्वाः प्रजाः प्रणयति तस्यैते प्राणाः
स्वाः स सदा स्वपित्यथैनमेते प्राणाः स्वाऽअपियन्ति
तस्मात् स्वाप्ययः स्वाप्ययो हवैत र्ठ० स्वप्नऽइत्याचक्षते
परोक्षं परोक्षकामाहि देवाः ॥ १४ ॥ सऽएतैः सुप्तो न
कस्यच न वेद न मनसा संकल्पयति न व्वाचाऽन्नस्य रसं
विजानाति न प्राणेन गन्धं विजानाति न चक्षुषा पश्यति
न श्रोत्रेण शृणोत्येतर्ठ०ह्येते तदा पीता भवन्ति सऽएषऽएकः
सन् प्रजासु बहुधा व्याविष्टस्तस्मादेका सती लोकस्पृणा
सर्वमग्निमनुविभवत्यथ यदेक एव तस्मादेकः ॥ १५ ॥
तदाहुरेको मृत्युर्बहवऽइत्येकश्च बहवश्चेति ह ब्रूयाद्यदहा-
सायमुत्र तेनैकोथ यदिह प्रजासु बहुधा व्यादिष्टस्तेनो

भवः ॥१६॥ तदाहुरंतिके मृत्युर्दूराऽइत्यन्तिके च दूरे चेति
हव्ब्रूयाद्यदहायमिहाध्यात्मंतेनान्तिकेऽथयदसावमुत्र तेनो
दूरे ॥ १७ ॥ तदेषश्लोको भवत्यन्न्ये भात्यपश्रितो रसा-
नाथं संचरेमृतऽइति यदेतन्मंडलं तपति तदन्नमथ यऽएष-
ऽएतस्मिन्मण्डले पुरुषःसोत्तासऽएतस्मिन्नन्नापश्रितो भाती-
त्यधिदैवतम् ॥ १८ ॥ अथाध्यात्ममिदमेव शरीरमन्नमथ
योयं दक्षिणेच्चन् पुरुषः सोत्ता सऽएतस्मिन्नन्नोपश्रितो
भाति ॥ १६ ॥ तमेतमग्निरित्यध्वर्यवऽउपासते । यजु-
रित्येष हीदर्ठ०सर्वर्ठ०युनक्ति सामेति छन्दोगाऽएतस्मिन्
हीदर्ठ०सर्वर्ठ०समानमुक्थमिति बह्वृचाएष हीदर्ठ०सर्वमुत्था
पयति यातुरिति यातुविदऽएतेन हीदर्ठ०सर्वयतं विषमिति
सर्पाःसर्पऽइति सर्पविदऽऊर्गिति देवारयिरिति मनुष्या
मायेत्यसुराः स्वधेति पितरो देवजनऽइति देवजनविदो
रूपमिति गन्धर्वागन्धऽइत्यप्सरसस्तं यथायथोपासते तदेव-
भवति तद्धैनान् भूत्वावति तस्मादेनमेवं वित्सर्वैरेवैतैरुपा-
सीत सर्वर्ठ०हैतद्भवतिसर्वर्ठ०हैनमेतद्भूत्वाऽवति ॥२०॥
सऽएषऽत्रीष्टकोऽग्निर्ऋग्गेका यजुरेकासामैका तद्यांकांचात्र-
र्चोपदधाति रुक्मऽएव तस्याऽआयतनमथ यां यजूषा
पुरुषऽएव तस्याआयतनमथ यार्ठ०साम्नापुष्करपर्णमेवतस्या-
ऽआयतनयुक्तं त्रीष्टकः ॥२१॥ ते वाऽएतेऽउभेऽएष च रुक्म-
ऽएतच्च पुष्करपर्णमेतं पुरुषमपीतऽउभे ह्यृक्सामेयजूरपीतऽएवं

वैकेष्टकः ॥२२॥ सऽएषऽएवमृत्युर्यऽएषऽएतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः सऽएष एवंविद आत्मा भवति स यदेवं विदस्माँल्लोकात् प्रैत्यथैतमेवात्मानमभि- सम्भवति सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति ॥२३॥ तेन वा इदमग्रे सदासीन्नैव सदासीत् ॥

इति ततः सूर्य्यं नमस्कृत्य तर्पणं कुर्यात्॥ तत्र सव्यः— प्राङ्मुखः प्रागग्रेण देवतीर्थेन साक्षतं जलाञ्जलिं देवर्षिभ्यो दद्यात्। पुनः कण्ठीकृतोपवीतः कायतीर्थेन सयवं जलाञ्जलिं सनकादिभ्यः प्रत्येकं द्विद्विवारं दद्यात्। पुनः जीवत् पितृकः- आभकोष्ठं कृतापसव्यः- अजीवत् पितृकस्तु अपसव्य एव, पितृतीर्थेन सतिलोदकेन देवपितॄ स्त्रिस्त्रिवारं तर्पयेत्। पुनर्जीवितपितृकस्य नाधिकारः। तत्रादौ साक्षतं जलमादाय—

ॐ तत्सत् श्रीमद्भगवतो महापुरुषस्याज्ञया प्रवर्त्तमानस्य ब्रह्मणो द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथम चरणे बौद्धावतारे रामराज्ये भूर्भुवःस्वर्लोकानाम्मध्ये भूर्लोके जम्बूद्वीपे भरतखण्डे आर्य्यावर्त्ते पुण्यक्षेत्रे ( अमुकपुण्यक्षेत्रान्तर्गते वा ) अमुक देशे श्रीविक्रमादित्यराज्यतः अमुक सङ्ख्याके अमुकनामसंवत्सरे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकगोत्रोऽमुकनामाहं देवर्षि

---

॥ अत्र केचिद् ब्रह्मयज्ञं कुर्वन्ति, किन्तु सदाचारात्तर्पणान्त एव ब्रह्मयज्ञो विधेय इति तत्रैव निरूप्यते।

(दिव्य) पितॄणां (स्वपितॄणां) च तर्पणाख्यं कर्म्म करिष्ये ॥
इति संकल्प्यदेवर्पितर्पणं कुर्यात् । तत्रादौ जलमादाय ।

ॐ विश्वेदेवास इति मन्त्रस्य गृत्समदऋषिर्विश्वेदेवा देवता गायत्रीछन्दो देवर्षीणामावाहनं विनियोगः ॥

इति जलं क्षिपेत् । ततः साञ्जलिः पूर्वाभिमुखः ।

ॐ विश्वेदेवासऽआगत शृणुतमऽइमठं॰ हवम् । एदं वर्हिर्निषीदत । इति मन्त्रं पठेत् पुनर्जलमादाय ।

ॐ विश्वेदेवाः शृणुतेम इति मन्त्रस्य सुहोत्रऋषिर्विश्वेदेवा देवतास्त्रिष्टुप्छन्दो देवर्षीणामासन्त्रणे विनियोगः॥

इति जलं क्षिपेत् । पुनः साञ्जलिः—

ॐ विश्वेदेवाः शृणुतेमठं॰ हवम्मे ये अन्तरिक्षे यऽउपद्यविष्ठ । ये ऽअग्निजिह्वाऽउतवा यजत्रा आसद्यास्मिन् वर्हिषिमादयध्वम् । इत्युच्चरेत् । ततः कुशपवित्र धारणंकुर्यात् ।

ॐ पवित्रे स्थो वैष्णव्यौ सवितुर्वः । प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्यरश्मिभिः । तस्यते पवित्रपते पवित्र पूतस्य यत्कामः पुनेतच्छकेयम् ॥

इति पठेत् । ततः ऋजुकुशोपग्रहः सव्यः सन् साक्षतोदकेन ।

ॐ ब्रह्मातृप्यताम् १ । ॐ विष्णुस्तृप्यताम् १ । ॐ रुद्रस्तृप्यताम् १ । ॐ प्रजापतिस्तृप्यताम् । ॐ देवास्तृप्यन्ताम् । ॐ छन्दांसितृप्यन्ताम् । ॐ वेदास्तृप्यन्ताम् १ । ॐ ऋषयस्तृप्यंताम् १ । ॐ संवत्सरः सावयवस्तृप्यताम् १ । ॐ देव्यस्तृप्यन्ताम् १ । ॐ पुराणाचार्य्यास्तृप्यंताम् १ ।

ॐ गन्धर्वास्तृप्यंताम् १ । ॐ इतराचाय्यो-स्तृप्यंताम् १ । ॐ नागास्तृप्यंताम् १ । ॐ अप्सर-सस्तृप्यंताम् १ । ॐ देवानुगास्तृप्यंताम् १ । ॐ सागरा-स्तृप्यंताम् १ । ॐ पर्वतास्तृप्यंताम् । १ ॐ सरितस्तृप्य-न्ताम् १ । ॐ मनुष्यास्तृप्यंताम् १ । ॐ यक्षास्तृप्य-ताम् १ । ॐ रक्षांसितृप्यंताम् १ । ॐ पिशाचास्तृप्यं-ताम् १ । ॐ सुपर्णास्तृप्यन्ताम् १ । ॐ भूतानितृप्य-न्ताम् १ । ॐ पशवस्तृप्यंताम् १ । ॐ वनस्पतयस्तृप्यं-ताम् १ । ॐ ओषधयस्तृप्यंताम् १ । ॐ भूतग्रामचतुर्विध-स्तृप्यताम् । इति देव तर्पणम् । अथ ऋषितर्पणम् सव्येनैव ॥

ॐ मरीचिस्तृप्यताम् १ । ॐ अत्रिस्तृप्यताम् १ । ॐ अंगिरास्तृप्यताम् १ । ॐपुलस्त्यस्तृप्यताम् १ । पुलह-स्तृप्यताम् १। ॐक्रतुस्तृप्यताम् १। ॐप्रचेतास्तृप्यताम् १। ॐ वशिष्ठस्तृप्यताम् १ । ॐ भृगुस्तृप्यताम् १ । नारद-स्तृप्यताम् १ ॥

इति ऋषीन् देववत् देवतीर्थेन प्राङ्मुख यवोदकेनो-दकेनैव वा तर्पयेत् । ततः कण्ठीकृत्वा काय-तीर्थेन द्वौ द्वावञ्जलीं दद्यात् ।

ॐ सनकस्तृप्यताम् २ । ॐसनन्दनस्तृप्यताम् २।ॐ सनातनस्तृप्यताम् २। ॐकपिलस्तृप्यताम् २। ॐआसुरि-

स्तृप्यताम् २। ॐवोढस्तृप्यताम् २। ॐपंचशिखस्तृप्यताम् २।

इति मनुष्यांस्तर्पयेत् ततः मृतपितृकोऽपसव्यः सन् जीवत्पितृकस्तु आप्रकोष्ठम् अपसव्यः सन्, दक्षिणाभिमुखः पितृभ्यः पितृतीर्थेन सतिलजलाञ्जलित्रयं प्रत्येकं दद्यात् । तत्रादौ जलमादाय ।

ॐउशन्तस्त्वेति मंत्रस्य प्रजापतिर्ऋषिः पितरोदेवता अनुष्टुप्छन्दः ( दिव्य ) पितॄणामावाहने विनियोगः ।

इति जलं क्षिपेत् । ततः सांजलिः दक्षिणाभिमुखः ।

ॐउशन्तस्त्वा निधिमह्युशन्तः समिधीमहि । उशन्नुशतऽआवह पितॄन् हविषेऽअत्तवे ।

इति पठेत् ।। ततः पुनर्जलमादाय ।

ॐ आयन्तु न इत्यस्य शङ्ख ऋषिः पितरो दवता त्रिष्टुप्छन्दः ( दिव्य ) पितॄणामामन्त्रण विनियोगः ।

इति जलं क्षिपेत । पुनः सांजलिः ।

ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तुतेवन्त्वस्मान् ।

ॐकव्यवाडनलस्तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः ३। ॐसोमस्तृप्यतामिदं तिलोदकं तस्मैस्वधा नमः ३। ॐ यमस्तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः ३ । ॐ अर्य्यमा तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः ३ । ॐअग्निष्वात्तास्तृप्यंतामिदं तिलोदकं तेभ्यः स्वधा नमः ३।

ॐ सोमस्तृप्यन्तामिदं तिलोदकं तेभ्यः स्वधा नमः ३ । ॐ बर्हिषदस्तृप्यन्तामिदं तिलोदकं तेभ्यः स्वधा नमः २ । ॐ यमाय नमः ३ । ॐ धर्म्मराजाय नमः ३ । ॐ मृत्यवे नमः ३। ॐ अन्तकाय नमः ३ । ॐ वैवस्वताय नमः ३ । ॐ कालाय नमः३ । ॐ सर्वभूतक्षयाय नमः ३ । ॐ औदुम्बराय नमः ३। ॐ दध्नाय नमः ३ । ॐ नीलाय नमः ३ । ॐ परमेष्ठिने नमः ३ । ॐ वृकोदराय नमः ३ । ॐ चित्राय नमः ३ । ॐ चित्रगुप्ताय नमः ३ । अथ मृतपितृक एव साञ्जलिः ।

ॐ आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम् । इति पितृनावाह्य ।

ॐ उदीरतामवर उत्परासऽउन्मध्यमाः पितरः सोम्यासः । असुं यऽईयुरवृकाऽऋतज्ञास्तेनोवन्तु पितरो हवेषु ॥ ॐ अद्यामुकगोत्रः अस्मत् पिता अमुक (शर्म्मा) वसुस्वरूपस्तृप्यतामिदं जलं सतिलं तस्मै स्वधा ॥ १ ॥

इति मन्त्रेण वाक्येन च प्रथमाञ्जलिं पित्रे दद्यात् ।

ॐ अङ्गिरसो नः पितरो नवग्वा अथर्वाणो । भृगवः सोम्यासः । तेषां वयठं ० सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ॐ अद्यामुकगोत्रः अस्मत् पिता अमुक (शर्म्मा) वसुस्वरूपस्तृप्यतामिदं जलं सतिलं तस्मै स्वधा ।

इति पित्रे द्वितीयाञ्जलिं दद्यात् ।

ॐ आयन्तुः नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभि-

देंवयानैः । अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् । ॐ अद्यामुकगोत्र अस्मत् पिताऽमुक (शर्म्मा) वसुस्वरूपस्तृप्यतामिदं जलं सतिलं तस्मै स्वधा ।

इति पित्रे तृतीयाञ्जलिं दद्यात् ।

ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं । स्वधास्थ तर्पयत मे पितृन् । ॐ अद्यामुकगोत्रः अस्मत् पितामहोऽमुक (शर्म्मा) रुद्रस्वरूपस्तृप्यतामिदं जलं सतिलं तस्मै स्वधा । इति पितामहाय प्रथमाञ्जलिं दद्यात् ।

ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः । प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः । अक्षन पितरोमी मदन्त पितरोतीतृपन्त पितरः पितरःशुन्धध्वम् ॥ ॐअद्यामुकगोत्रः अस्मत् पितामहोऽमुक (शर्म्मा) रुद्रस्वरूपस्तृप्यतामिदं जलं सतिलं तस्मै स्वधा । इति पितामहाय द्वितीयाञ्जलिं दद्यात् ।

ॐ ये चेह पितरो ये च नेहयांश्च विद्मयांश्च उचन प्रविद्म । त्वं व्वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञठं॰सुकृतं जुषस्व ॥ ॐ अद्यामुकगोत्र अस्मत् पितामहोऽमुक (शर्म्मा) रुद्रस्वरूपस्तृप्यतामिदं जलं सतिलं तस्मै स्वधा ॥

इति पितामहाय तृतीयाञ्जलिं दद्यात् ।

ॐ मधुव्वाताऽऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥ ॐ अद्यामुकगोत्र अस्मत् प्रपिता-

महोऽमुक ( शर्म्मा ) आदित्यस्वरूपस्तृप्यतामिदं जलं सतिलं तस्मै स्वधा । इति प्रतितामहाय द्वितीयाञ्जलिं दद्यात्।

ॐ मधुनक्तमुतोषसो मधुमत् पार्थिवर्ठ०रजः मधुद्यौरस्तु नः पिता ॥ ॐ अद्यामुकगोत्र अस्मत् प्रपितामहोऽमुक ( शर्म्मा ) आदित्यस्वरूपस्तृप्यतामिदं जलं सतिलं तस्मै स्वधा ॥ इति प्रपितामहाय द्वितीयाञ्जलिं दद्यात्।

ॐ मधुमान्नो वनस्पतिर्मधुमां २ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः ॥ ॐ अद्यामुकगोत्र अस्मत् प्रपितामहोऽमुक ( शर्म्मा ) आदित्यस्वरूपस्तृप्यतामिदं जलं सतिलं तस्मै स्वधा ॥

इति प्रपितामहाय तृतीयाञ्जलिं दद्यात् । ततः ॐ तृप्यध्वं ३ । इति पित्रादिभ्योञ्जलित्रयं दद्यात् ।

ॐ अद्य अमुकगोत्रा माता अमुकीदागायत्री स्वरूपा तृप्यतामिदं जलं सतिलं तस्यै स्वधा ३ । ॐ अद्य अमुक गोत्रा पितामही अमुकीदा सावित्री स्वरूपा तृप्यतामिदं जलं सतिलं तस्यै स्वधा ३ ॥ ॐ अद्य अमुक गोत्रा प्रपितामही अमुकीदा सरस्वती स्वरूपा तृप्यतामिदं जलं सतिलं तस्यै स्वधा ३ ॥ ॐ तृप्यध्वम् ३ । ततः ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो

गृहान्नः पितरो दत्तसतो वः पितरो देष्मैतद्वः पितरोवासः ॥ ॐ अद्यामुकगोत्रो अस्मन् मातामहोऽमुक ( शर्म्मा ) तृप्यतामिदं जलं सतिलं तस्मै स्वधा ३ ।

इति मातामह्यायाञ्जलित्रयं दद्यात् । एवमेवानेनैव मन्त्रेण प्रमातामह्याय वृद्धप्रमातामह्याय च त्रींस्त्रींस्तिलोदकाञ्जलीन् पृथक् २ दद्यात् । मातामही प्रमातामही वृद्धप्रमातामहीस्त्वेकैका ञ्जलिना तर्पयेत् । ततः ❀ आचार्य्यादीन्नामगोत्रस्वधाकारस्तर्पयेत् । ततः सव्यम् ।

ॐ देवासुरास्तथा यक्षा नागा गन्धर्व राक्षसाः । पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः ॥ जलेचरा भूनिलया वाय्वाहाराश्च जन्तवः । तृप्तिमेते प्रयान्त्वाशु मद्दत्ते नाम्बुनाऽखिलाः

इति दद्यात् । ततः अपसव्यम् दक्षिणाभिमुखः ।

ॐ नरकेषु समस्तेषु यातनासु च ये स्थिताः । तेषामाप्यायनार्थैतद्दीयते सलिलं मया । येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः । ते तृप्ति मखिलंयान्तु

---

❀ पत्न्याद्यामान्तपितृगणस्य अस्मत्पत्नी अस्मत्सुतः अस्मत्पितृव्य इत्यादि सम्बन्धगोत्रनामोच्चार्यवसुरूपत्रींश्रींनञ्जलिं दत्वा तर्पणं कुर्यात् । यदि तस्य भार्यासुतो मृतस्तर्हि सपत्नीकः ससुतः इत्यूहकार्यः ॥ एवं पितृव्यादौज्ञेयम् ॥ सुतादीनांबहुत्वेज्येष्ठाद्यनुक्रमोग्राह्यः ॥ यदि तस्या भर्ता सुतो मृतस्तर्हि स भर्तृकाससुतइत्यूहः कार्यः ॥ एवं पितृ भगिन्यादौ । एवंसापत्न भ्राता सापत्नभगिनी च ग्राह्या ॥

यश्चास्मत्तोऽभिवाञ्छति ॥ मातृवंशे मृता ये च पितृवंशे तथैव च ॥ गुरु श्वसुर बंधूनां ये चान्ये बांधवास्मृताः ॥ ये मे कुले लुप्तपिंडाः पुत्रदार विवर्जिताः ॥ तृप्यन्तु पितरस्सर्वेमातृमाता महादयः ॥ अतीत कुल कोटीनां सप्तद्वीपनिवासिनां ॥ आब्रह्मभुवनांल्लोकमिदमस्तु तिलोदकम् । ॐ तृप्यध्वम् ३ । अथ भीष्म तर्पणम् ॥

वैयाघ्रपद्य गोत्राय सांकृति प्रवराय च । अपुत्राय ददाम्येतज्जलंभीष्मायवर्मणे ॥ वसूनामवताराय शन्तनोरात्मजाय च । जलं (अर्घ्यं) ददामि भीष्माय आबालब्रह्म चारिणे इति त्रिः ॥ नमस्कारः ॥ भीष्मः शान्तवो वीरः सत्यवादी जितेन्द्रियः । आभिरद्भिरवाप्नोतु पुत्र पौत्रोचितां क्रियाम् ॥ इति । ततः धौतवस्त्र निष्पीड़नम् ।

ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते पिबन्तु मया दत्तं* वस्त्रनिष्पीडनोदकम् ॥

इति । ततः सव्यं कृत्वा आचम्य प्राणानायम्य सूर्याय जलाञ्जलिं दद्यात् । तत्र

ॐ नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे । जगत्सवित्रे शुचये नमस्ते कर्म्मदायिने ॥ परिक्रमा ॥ यानि कानि च पापानि जन्मान्तर कृतानि च ॥ तानि तानि

---

* वस्त्रं चतुर्धा कृत्वा भूमौ वामभागे निष्पीड़येत् तर्पित जले पवित्रं विसृजेत् ॥

प्रपश्यन्ति प्रदक्षिण पदे पदे ।। आदित्यस्य नमस्कारं येकुर्वन्तिदिनेदिने। जन्मान्तरसहस्रेषु दारिद्र्यं नोपजायते ।। ॐ ब्रह्मामुरारिस्त्रिपुरान्तकारी भानुश्शशीभूमिसुतोबुधश्च ।। गुरुश्चशुक्रःशनिराहुकेतवः सर्वेग्रहाः शांतिकराभवन्तु ।। विसर्जनं ॐदेवागातु विदोंगातु वित्वागातुमित। मनसस्पतऽइमन्देवयज्ञठं० स्वाहा वातेधाः ।। अनेन यथाशक्ति देवर्षि पितृतर्पणाख्येन कर्मणा भगवान् पितृस्वरूपी जनार्दनः प्रीयतांनमम ।। ॐ तत्सद्ब्रह्मार्पणमस्तु ।

अथ ब्रह्मयज्ञः तत्र कर्ता शुद्धः सन् आचम्य प्राणानायम्य कुशापवित्रधारणम् सङ्कल्पं कुर्यात् । यथा—आचम्य ।

ॐ केशवाय नमः ।। १ ।। ॐ माधवाय नमः ।। २ ।। ॐ नारायणाय नमः ।। ३ ।। ॐ हृषीकेशाय नमः ।।

इति हस्तौ प्रक्षाल्य ।। प्राणानायम्य ।

ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियो योनः प्रचोदयात् ।। ॐ आपोज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ।।

कुशा पवित्रधारणम्

ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्यरश्मिभिः ।। तस्य ते पवित्रपते पवित्रपूतस्ययत्कामः पुनेतच्छकेयम् ।।

इति पठेत् । संकल्पं कुर्यात् ।

ॐ तत्सत् ३ श्रीमद्भगवतो विष्णोराज्ञया प्रवर्त्तमानस्य ब्रह्मणो द्वितीयपरार्द्धे श्रीश्वेतवाराह कल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे बौद्धावतारे रामराज्ये जम्बूद्वीपे भरतखण्डे आर्य्यावर्त्तेऽमुकदेशेऽमुकक्षेत्रेऽमुकगोत्रोऽमुकनामाऽहं ममात्मनःश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं सर्वाभीप्सित सिद्धयर्थं श्रीपरमेश्वरप्रीतिपूर्वकमशेषपुण्यफलोदयार्थं ब्रह्मयज्ञं कर्म करिष्ये ।इति। ततोऽङ्गानि स्पृशेत् ।

ॐ गौतम भरद्वाजाभ्यां नमः नेत्रयोः ।

ॐ विश्वामित्र जमदग्निभ्यां नमः श्रोत्रयोः ।

ॐ वसिष्ठ कश्यपाभ्यां नमः नासिकयोः ।

ॐ अत्रये नमः वाचि ।

ॐ गायत्र्यग्निभ्यां नमः शिरसि ।

ॐ उष्णिक्सवितृभ्यां नमः ग्रीवायां ।

ॐ बृहती बृहस्पतिभ्यां नमः हृदि ।

ॐ बृहद्रथन्तर द्यावापृथिवीभ्यां नमः बाह्वोः ।

ॐ त्रिष्टुबिंद्राभ्यां नमः नाभौ ।

ॐ जगत्यादित्याभ्यां नमः श्रोण्योः ।

ॐ अतिच्छन्दः प्रजापतिभ्यां नमः लिंगे

ॐ यज्ञायज्ञियवैश्वानराभ्यां नमः गुदे ।

ॐ अनुष्टुब्विश्वेभ्यो देवेभ्यो नमः ऊर्वोः ।

ॐ पङ्क्तिमरुद्भ्यो नमः जान्वोः ।

ॐ द्विपदाविष्णुभ्यां नमः पादयोः।
ॐ विच्छन्दावायुभ्यांनमः नासापुटप्राणेषु।
ॐ न्यूनाक्षरच्छन्दोभ्यो नमः सर्वांगेषु।

एवमेवाङ्गानियोजयित्वा वेदमयः संपद्यते । नक्कुत-श्चिद्भयंविंदते। शापानुग्रह सामर्थ्यं ब्राह्मंतेजश्चवर्द्धते स्वर्गलोकं परंसाधनं। धर्मार्थ काम मोक्षस्य च तस्य-दारिद्र्य दुःख शोक रोगभयं न भवति।

ॐ इषेत्वादिषु मंत्रेषु खंब्रह्मान्तेषु दशप्रणवसहितेषु-याक्रियास्तत्र विवस्वानृषिः प्रजापतिर्देवता सर्वाणि छन्दांसि सर्वाणि सामानि प्रतिलिङ्गोक्तादेवता ब्रह्मयज्ञे विनियोगः॥
इति जलं विसृज्य। मन्त्रान् पठेत्। यथा।

"ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्। ॐ इषेत्वोर्जे त्वा व्वायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमायकर्मण-ऽआप्यायद्ध्वमघ्न्याऽइन्द्राय भागं प्रजावतीरनमीवाऽअय-क्ष्मामावस्तेनऽईशतमाघशंठं॰सोंध्रुवाऽअस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून् पाहि १ ॐवसोः पवित्र असि शत-धारम्। वसोः पवित्रमसि सहस्रधारम्। देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः २। ॐ हिरण्मयेन पात्रेण सत्यस्याऽपिहितं मुखम्। योसावा-दित्ये पुरुषः सोसावहम्। ॐ खं ब्रह्म। ॐ व्रतमुपैष्यन-

न्तरेणाहवनीश्च गार्हपत्यं च प्राङ् त्तिष्ठन्नपऽउपस्पृशति ।
तद्यदपऽउपस्पृशत्यमध्यो वै पुरुषो यदनृतं वदति तेन
पूतिरनन्तरतो मेध्यावाआवो मेध्यो भूत्वा व्रतमुपायानीति
पवित्रम् । वाऽआपःपवित्रपूतो व्रतमुपायानीति तस्माद्वा-
ऽअपऽउपस्पृशति ॥ १ ॥ सोऽग्निमेवाभीक्षमाणो व्रतमु-
पैति ॥ ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदुच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । ॐ खं ब्रह्म ।
ॐ खं पुराणम् । ॐ वायुरेव खमिति । इस्माह कौरव्या-
यणीपुत्रो वेद यं ब्राह्मणा विदुर्वेदेन न यद्वेदितव्यम् ।
ॐ प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्रऽआसुरायणादा-
सुरायणऽआसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्यऽउद्दालकादु-
द्दालकोऽरुणादरुणऽउपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो
वाजश्रवा जिह्वावतो वाध्योगाज्जिह्वावान् वाध्योगोऽसि-
ताद्वार्षगणादसितो वार्षगणो हरितात् कश्यपाद्धरितः
कश्यपः शिल्पात् कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रु-
वेः कश्यपो नध्रुविर्वाचोवागम्भिण्याऽअम्भिण्यादित्या-
दादित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्ये
नाख्यायन्ते इत्युक्तं बृहदारण्योपनिषदि ॥ ॐ अग्निमीले
पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ ॐ
इषेत्वोर्जेत्वाव्वायवस्थदेवो वः सविता प्रार्पयतु श्रे ष्ठतमाय-
कर्म्मणऽआप्यायद्ध्व मघ्न्याऽइन्द्रायभागं प्रजावतीरनमीवाऽ

अयक्ष्मामावस्तेनऽईशतमाघशंऽसौ ध्रुवाऽअस्मिन्गोंपतौस्यातवह्वीर्यजमानस्य पशून्पाहि ॥ ॐ अग्नऽआयाहि वीतये गृणानो हव्यदातये। निहोता सत्सि बर्हिषि। ॐ शन्नो-देवीरभिष्टयऽआपो भवन्तुपीतये। शंयोरभिस्रवन्तु नः चतुर्वेदानन्तरं अंगानिपठेत् ॥ अथातुवाकान् वक्ष्यामि। मण्डलं दक्षिणमक्षिहृदयम्। अथ शिक्षां प्रवक्ष्यामि। अथातो अधिकारः फलयुक्तानि कर्म्माणि। अथातो गृह्यस्थालीपाकानां कर्म्म। वृद्धिरादैच्। समाम्नायः समाम्नातः। मयरसतजभनलगसम्मितम्। पंचसंवत्सरमयं युगाध्यक्षम्। गौः ग्माः। अथातो धर्मजिज्ञासा। अथातोब्रह्म-जिज्ञासा। योगीश्वरं याज्ञवल्क्यम्। नारायणं नमस्कृत्य इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः। वाग्यज्ञेनार्चितोदेवः प्रीयतां मे जनार्दनः ॥

इति पठित्वा कुशां उत्तरस्यां क्षिपेत्। ततः जलमादाय।

अनेन ब्रह्मयज्ञाख्येन कर्म्मणा श्रीभगवान् परमेश्वरः प्रीयतां न मम। ॐतत्सद् ब्रह्मार्पणमस्तु। इति जलं क्षिपेत् ॥

ॐप्रमादात् कुर्वतां कर्म्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ ॐ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं सम्पूर्णतां याति सद्योवन्दे तमीश्वरम् ॥

जलाद्बहिरागत्य धौतवस्त्रोपवस्त्रं परिधाय. आसनारोहणं कृत्वा भस्मचंदनादिनातिलकं विधाय।

ॐ पृथ्वीतिमंत्रस्यमेरुपृष्ठ ऋषिः सुतलंछन्दः कूर्मो देवता आसनोपवेशनेविनियोगः ॥ ॐ पृथ्वीत्वयाधृतालोकादेवित्वं विष्णुनाधृता । त्वं च धारय मां देवि पवित्रं कुरुचासनम् ॥

आचम्य ।

ॐकेशवायनमः १ । ॐमाधवाय नमः २ ॥ ॐनारायणाय नमः ३ । हृषीकेशाय नमः ॥ इति हस्तौ प्रक्षाल्य।

अथ विघ्नोत्सारणं ।

ॐ अपः सर्पन्तु येभूता ये भूताभूमिसंस्थिताः । येभूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया । अपः क्रामन्तुभूतानि पिशाचाः सर्वतोदिशम् । सर्वेषामवरोधेन पूजाकर्मसमारभे ॥

प्राणानायम्य ।

ॐभूः, ॐभुवः, ॐस्वः, ॐमह, ॐजन, ॐतपः, ॐसत्यं ॐतत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियो योनः प्रचोदयात् । ॐआपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम्॥

अक्षतान् गृहीत्वा स्वस्तिवाचनं पठेत् ।

ॐश्रीमन्महागणाधिपतयेनमः । हरिः ॐगणानान्त्वा-गणपति ठं॰ हवामहे प्रियाणान्त्वाप्रियपति ठं॰ हवामहे निधीनान्त्वा निधिपति ठं॰ हवामहे वसोमम ॥ आहमजानि गर्भधमात्वमजासि गर्भधम् ॥१॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्ति नः पूषाविश्ववेदाः । स्वस्तिनस्तार्क्ष्योअरिष्टनेमिः स्वस्तिनो वृहस्पतिर्दधातु ॥ २ ॥ पयः पृथिव्यां पय-ऽओषधीषुपयोदिव्यन्तरिक्षे पयोधाः पयस्वतीःप्रदिशःसन्तु

मह्यम् ॥३॥ विष्णोरराटमसिविष्णोः श्नप्त्रेस्थोविष्णोःस्यूर-
सिविष्णोर्ध्रुवोसि । वैष्णवमसिविष्णावेत्वा ॥४॥ अग्निर्दे-
वता वातोदेवता सूर्योदेवता चन्द्रमादेवता वसवोदेवता रुद्रा-
देवतादित्यादेवतामरुतोदेवता विश्वेदेवादेवता बृहस्पतिर्देव-
तेन्द्रोदेवतावरुणोदेवता॥५॥ द्यौःशान्तिरन्तरिक्षꣳशान्तिः-
पृथिवीशान्तिरापःशान्तिरोषधयःशान्तिः। वनस्पतयःशांति
र्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वꣳशांतिः शान्तिरेवशा-
न्तिःसामाशान्तिरेधि॥६॥विश्वानिदेवसवितर्दुरितानिपरा-
सुव। यद्भद्रंतन्न आसुव॥७॥ एतंतेदेवसवितर्यज्ञंप्राहुर्बृहस्प-
तयेब्रह्मणे । तेनयज्ञमवतेनयज्ञपतिंतेनमामव॥८॥मनोजूतिर्जु-
षतामाज्यस्यबृहस्पतिर्यज्ञमिमंतनोत्वरिष्टंयज्ञꣳसमिमंदधातु।
विश्वेदेवासऽइहमादयन्तामों ३ प्रतिष्ठ ॥९॥ एषवै प्रतिष्ठा-
नाम यज्ञोयत्रैतेन यज्ञेनयजन्तेसर्वमेवप्रतिष्ठितंभवति ॥१०॥

संकल्पार्थ जलाक्षत द्रव्याण्यादाय ।

ॐ तत्सत् श्रीमद्भगवतो महापुरुषस्याज्ञया सृष्टिं
कुर्वतो ब्रह्मणो द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्व-

---

तत्र पूर्वस्यांदिशि पीठोपरि वस्त्रं प्रसार्य अग्निकोणे स्वस्तिकं विलिखेत् पूर्वे पंचोंकारान्स्थापयेत् नैऋत्यां वास्तु पुरुषंस्थापयेत् । वायव्येयोगिनी क्षेत्रपालान्, उत्तरे गौर्यादि षोडषमातृः सप्तचिरंजीविनः स्थापयेत् ॥ ईशाने तण्डुलानामष्ट दलोपरि स्वर्णं कलशमव्रणं सवस्त्रं मस्तकोपरि श्रीफलभूषितं स्थापयेत् ॥ तत्रैवसूर्यादिनवग्रहान्स्थापयेत् ॥ मध्ये अरुन्धतीस-हितान्सप्तर्षीन्स्थापयेत् ॥

तमन्वन्तरे कलियुगे कलिप्रथमचरणे बौद्धावतारे रामराज्ये भरतखण्डे आर्यावर्त्तेऽमुकपुण्यक्षेत्रे ( अमुकपुण्यक्षेत्रान्तर्गते वा ) अमुकदेशेऽमुकनगरे श्रीविक्रमार्कराज्यतो रमुकसङ्ख्या अमुकनाम संवत्सरे दक्षिणायने उत्तर गोले प्रावृषिऋतौ श्रावणे मासि शुक्ल पक्षे पौर्णमास्याममुकवासरेऽमुकनक्षत्रे अमुकगोत्रोऽमुकनामोऽहमध्ययनोत्सर्गकर्म्माङ्गत्वेनारुन्धतीसहितानां सप्तर्षीणां स्थापनं पूजनं च करिष्ये। तदङ्गत्वेन निर्विघ्नतापरिसमाप्त्यर्थं गणपति पंचोंकार वास्तु दिव्यादि ६४ योगिनी ५० क्षेत्रपाल गौर्यादिषोड़पमातृका सप्तचिरंजीवसूर्यादिनवग्रह वरुण कलश विष्णवादि देवानां यथामिलितोपचारद्रव्यैःस्थापनपूजनं च करिष्ये ॥ इति संकल्प्योत्सृजेत्। हस्ते अक्षतानादाय ॥

ॐ हे हेरम्बत्वमेह्येह्यम्बिकात्र्यंबकात्मज। सिद्धिबुद्धिपते त्र्यक्ष कोटिसूर्यसमप्रभ॥नागास्यनागहारत्वंगणराजचतुर्भुज। भूषितःस्वायुधैर्दिव्यैः पाशांकुशपरश्वधैः॥ आवाहयामि पूजार्थं रक्षार्थं च ममक्रतोः। इहागत्यगृहाणत्वं पूजांरक्षचमे क्रतुम्॥ भूर्भुवःस्वर्गणेश इहागच्छ इहतिष्ट गणपतयेनमः गणपतिमावाहयामिस्थापयामिनमः। पादयोःपाद्यं,हस्तयोरर्घ्यं, मुखे आचमनीयं, सर्वाङ्गे स्नानीयं समर्पयामि नमः। वस्त्रोपवस्त्रार्थे, अलंकरणार्थे कौसुम्भसूत्रं साक्षतञ्च समर्पयामि नमः। यज्ञोपवीतंसमर्पयामि नमः, गन्धंविलेप-

यामि नमः॥अक्षतांसमर्पयामि नमः,पुष्पंसमर्पयामि नमः, दूर्वाङ्कुराणिसमर्पयामि नमः,धूपमाघ्रापयामिः,प्रत्यक्षदीपंदर्शयामिनमः, हस्तौप्रक्षाल्यनैवेद्यंऋतुफलं चनिवेदियामिनमः मध्ये २ आचमनीयंसमर्पयामि नमः। उत्तरापोषणार्थेकिंचिन्नैवेद्यंसमर्पयामि नमः। आचमनीयं समर्पयामि नम ः। मुखवासार्थे ताम्बूलपुङ्गीफलएलालवंगकर्पूरयुतंसमर्पयामि नमः। दक्षिणाद्रव्यं समर्पयामि नमः ॥

प्रार्थना

ॐउद्यद्दिनेश्वररुचिंनिजहस्तपद्मैः पाशांकुशाभयवरांदधतं गजास्यं। रक्ताम्बरंसकलदुःखहरं गणेशं ध्यायेत्प्रसन्नमखिलाभरणाभिरामम् ॥ १ ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः। नमस्ते रुद्ररूपाय करिरूपाय ते नमः। विश्वरूप स्वरूपाय नमस्ते ब्रह्मचारिणे। भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ॥ २ ॥

अथ विशेषार्घः।

ॐ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक भक्तानामभयंकर्ता त्राताभवभवार्णवात् ॥ द्वैमातुरकृपासिन्धो षाण्मातुराग्रजप्रभो। वरदत्वं वरंदेहि वांछितंवांछितार्थद ॥ अनेन सफलार्घ्येण फलदोस्तुसदामम। ॐ भूर्भुवःस्वःसिद्धिबुद्धि सहितगणपतये नमः विशेषार्घ्यंसमर्पयामि नमः ॥ अनया- पूजयागणपतिः सांगः सपरिवारः प्रीयताम् ॥

## अथ पूजन मण्डलम्

वरुण कलश

| | | | |
|---|---|---|---|
| नवग्रह | ब्रह्मा | | ॥ 卐 ॥ |
| पृथ्वी | यज्ञपतिः | गायत्री | गणेश |
| | गोवर्द्धन | | द्वादशमूर्त्ति गणेश |
| | विष्णुः व शिवः | | |
| १६ मातृका | | | |
| | सप्तर्षि | | |
| ७ सप्त चिरञ्जीव | ० ० ० ० ० ० ० | | वास्तु |
| ६४ योगिनी | | | |
| ५० क्षेत्रपाल | पूर्वाभिमुख | | |

यजमान का आसन

अथ पंचोङ्कार पूजनम्

ॐ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूरऽइषव्योतिव्याधीमहारथोजायतां दोग्ध्रीधेनुर्वोढानड्वा-नाशुः सप्तिः पुरन्धियोंषाजिष्णुरथेष्ठाः सभेयोयुवास्य यज-मानस्य वीरोजायतान्निकामेनिकामेनः पर्जन्योवर्षतुफल-वत्योनऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ ॐ भूर्भुवःस्वः पूर्वे ब्रह्मणे नमः। ॐभूर्भुवःस्वः दक्षिणे गायत्र्यै-नमः॥ ॐभूर्भुवः स्वः पश्चिमे गोवर्द्धनाय नमः॥ ॐभूर्भुवः स्वः उत्तरे पृथिव्यै नमः । ॐ भूर्भुवः स्वः मध्ये यज्ञपतये नमः॥ मनोजूतिरिति प्रतिष्ठाप्य,पाद्यादिभिः,पूजनंविधाय ॥

ध्यानम्

ॐ ब्रह्मा देवी च गायत्री तथा गोवर्द्धनेश्वरः। पृथ्वी-गणपतिश्चैतान् पंचोङ्कारान्नमाम्यहम् । अनयापूजयाब्रह्मा-दि पंचप्रणवाः प्रीयन्तु ॥ तत्रैव गणेश समीपे ॥

अथ द्वादश गणेश पूजनम् ॥

ॐ नमोगणेभ्यो गणपतिभ्यश्चवोनमो नमो व्रातेभ्यो-व्रातपतिभ्यश्चवो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्चवो नमो नमो विरूपेभ्योविश्वरूपेभ्यश्चवो नमोनमः ॥ वक्रादि-द्वादशमूर्ति गणेशेभ्यो नमः ॥ पाद्यादिभिःपूजनं विधाय ॥

प्रार्थना ॥

ॐनमो देव गणेशाय नमस्ते विघ्ननाशन । नमोमूषक-मारूढ शुभकर्त्रे नमोनमः॥ नमः कात्यायनीपुत्र नमः परशु-

पाणये । रवेरुदयतेरूपं विद्याबुद्धिविचचण । देहिमेरूपसौभाग्यं देहि मे पुत्रसंपदः । इच्छासिद्धि प्रदो देव यथोक्तमव मे सदा ॥ आपःपुनन्तुतत्सर्वं येनशुद्धोभवाम्यहम् ॥ अनया पूजया द्वादश गणपाः प्रीणन्तु नमम ।

अथ वास्तु पूजनम् ॥

ॐनमोस्तुसर्पेभ्यो ये के च पृथिवीमनु । येऽअन्तरिक्षे ये दिवितेभ्यः सर्पेभ्यो नमः॥ पाद्यादिभिः पूजनम्विधाय ॥

ध्यानम्

ॐनागपृष्ठसमारूढं शूलहस्तंमहाबलम् । पातालनायकं देवं वास्तुमावाहयाम्यहम्॥अनयापूजयावास्तुप्रीणातुनमम।

अथ दिव्यादि ६४ योगिनी पूजनम् ॥

ॐ जय दुर्गे महामाये सच्चिदानंददायिनी । (रूपिणी) प्रसीद मम कल्याणि योगिनीभ्यो नमोनमः ॥ दिव्यादि ६४ योगिनीभ्यों नमः । पाद्यादिभिः पूजयेत् अनया पूजया ६४ योगिन्यः प्रीणन्तु नमम ॥

अथ अजरादि ५० क्षेत्रपाल पूजनम् ॥

ॐ अजारे पिशंगिलाशस आस्कन्दमारेशसत्या हिपंथां विसर्पति ॥ अजरादि पंचाशत क्षेत्रपालेभ्यो नमः॥ पाद्यादिभिः पूजनं विधाय ॥ अनया पूजया ५० क्षेत्रपाः प्रीणंतु नमम । बलिदानं ॥ योगिन्यः क्षेत्रपालाश्च सर्वे

यत्र समागताः ॥ नगरे वाथ ग्रामे वा अटव्यांसरितस्तथा । ते सर्वे चैव संतुष्टा बलिं गृह्णन्तु मे सदा ॥ शरणागतो-स्म्यहं तेषां प्रयच्छन्तु ममेप्सितम् ॥ सर्वकार्याणि कुर्वंतु दोषांश्चघ्नन्तु मे सदा ॥

अथ सप्त चिरंजीव पूजनम् ॥

ॐ अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः ।
कृपाचार्य परशुराम सप्तैते चिरजीविनः ॥
पाद्यादि पूजम् विधाय ॥ अनेनैव प्रार्थना ॥

अथ षोडशमातृका पूजनम्

ॐ गौरी र्मिमाय सलिला नितच्त्यैकपदी द्विपदी-चतुष्पदी अष्टापदी नवपदी वा भूवशी सहस्राक्षरा परमे-व्योमन् ॥ गौर्यादिषोडशमातृभ्यो नमः पाद्यदिभिः पूजनं विधाय ॥ प्रार्थना ॥ ॐ गौरीपद्मा शची मेधा सावित्री विजया जया ॥ देवसेना स्वधा स्वाहा मातरोलोकमातरः॥ हृष्टि पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता ॥ गणेशेनाधिका ह्येता वृद्धौपूज्याश्चषोडश ॥ अनया पूजया गौर्यादिषोडश-मातरः प्रीयन्तु नमम ।

अथ कलश पूजनम् ।

ॐ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणे हबोध्युरुशंठ॰ समानऽआयुः प्रमोषीः। अपांपतये वरुणायनमः, पाद्यादिभिःपूजनंविधाय॥

प्रार्थना ॥

ॐ कलशस्यमुखेविष्णुः कण्ठेरुद्रःसमाश्रितः। मूलेतस्य-स्थितोब्रह्मा मध्येमातृगणास्तथा। कुक्षौतुसागराःसप्त सप्त-द्वीपावसुन्धरा ॥ ऋग्वेदोथ यजुर्वेदः सामवेदो ह्यथर्वणः। अंगैश्चसहिताः सर्वे कलशन्तु समाश्रिताः ॥

ॐ नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमंगलाय। सपाशहस्ताय झषासनाय जलाधिनाथाय नमोनमस्ते ॥ अनयापूजया वरुणः सांगः सपरिवारः प्रीयातु नमम ॥

अथ सूर्यादि नवग्रह पूजनम्

ॐ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यं च ॥ हिरण्ययेनसवितारथेनादेवोयाति भुवनानिपश्यन् ॥ सूर्यादि नवग्रहेभ्यो नमः। तत्रैव। ईश्वरादि अधिदेवताभ्यो नमः, अग्न्यादिप्रत्यधिदेवताभ्यो नमः, गणपत्यादि पंचलोक पालेभ्यो नमः, अश्विन्यादि २८ नक्षत्रेभ्यो नमः, मेषादि-१२ राशिभ्यो नमः, विष्कुंमादि २८ योगेभ्यो नमः, ववादि ७ करणेभ्यो नमः, ऋगादि ४ वेदेभ्यो नमः, इन्द्रादि १० दिग्पालेभ्यो नमः। पाद्यादिभिः पूजनं विधाय सूर्यादि अनन्तातेभ्यो देवेभ्यो नमः - ॥प्रार्थना॥ ॐ ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च गुरुश्च शुक्रः शनि राहु केतवः सर्वेग्रहाः शान्तिकराभवन्तु ॥ अनया पूजया सूर्यादयः प्रीयन्तु नमम ॥

अथ विष्णु वा शंकर पूजनं।

ततः पात्रेऽष्टदलं विधाय तुलसीदलं च निधाय शालग्राम-शिलाम् स्थाप्य पुरुषसूक्तेन वा साधारण पूजनं कुर्यात्।

ॐ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः। सरस्वतीतु पञ्चधा सो देशेऽभवत् सरित्।

इति मंत्रेण पञ्चामृतेन स्नापयेत्॥ पुनःशुद्धोदकेन स्नापयित्वा सिंहासने स्थापयेत्। पुनः— उपवीतं समर्प्य—

ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्। आयुष्यमग्र्यं प्रतिमुंच शुभ्रं यज्ञोपवीतं बलमस्तु तेजः॥

इति पठेत्। ततः—वस्त्रं गन्धं पुष्पाणि तुलसीदलानि च (शंकरोपरि विल्वपत्राणि)समर्पयेत्। पुनः धूपं घ्रापयित्वा, दीपं प्रदर्श्य हस्तौ प्रक्षाल्य च नैवेद्यं निवेदयेत्। तत्र मन्त्रोयथा—

ॐनाभ्याऽआसीद न्तरिक्षठं॰शीर्ष्णो द्यौः समवर्तत। पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथालोकाँ २ अकल्पयन्॥

इति। पुनराचनीयं दत्त्वा ऋतुफलं समर्पयेत्। पुनराच-मनीयं दत्त्वा सपूगीफलतांबूलं समर्पयेत्। दक्षिणां च दत्त्वा सांजलिः—प्रार्थयेत॥

ॐ नमोऽस्त्वनन्ताय सहस्रमूर्त्तये सहस्रपादाक्षि-शिरोरुबाहवे। सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटी-युगधारिणे नमः॥

इति पठित्वा प्रणमेत्

अथ सप्तऋषि पूजन क्रमः ।

तत्र पूर्वादौ "ऋचंवाचमिति" सूक्तं सर्वैःपठनीयम् । हस्ते गंधाक्षत पुष्पाणिगृहीत्वा ।

ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥

इति मन्त्रेण ब्रह्मग्रन्थियुक्तान् सारुंधतीकान् सप्तर्षीन् पीठोपरि विधाय प्राङ्मुखन्निदध्यात् पुनः—अक्षतानादाय स्थापनं कुर्य्यात् यथा—

ॐकश्यपोत्रिभरद्वाजो विश्वामित्रोथगौतमः । वसिष्ठो-यमदग्निश्च सप्तैतेऋषयःस्मृताः ॥ ॐ सप्त ऋषयः प्रति-हिताः शरीरेसप्तरक्षन्तिसदमप्रमादम् । सप्तापःस्वपतोलोक-मीयुस्तत्र जाग्रतोऽअस्वप्नजौसत्रसदौ च देवौ ॥ ॐमनो-जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳ समिमन्दधातु । विश्वेदेवासऽइहमादयन्तामों ३ प्रतिष्ठ । एषवै प्रतिष्ठानाम यज्ञोयत्रैतेनयज्ञेन यजन्ते सर्वमेव प्रति-ष्ठितं भवति ॥ सुप्रतिष्ठा सुप्रतिष्ठितमस्तु ॥ ॐ भूर्भुवः स्वररुन्धतीसहित सप्तर्षिभ्यो नमः ॥

---

१ अपामार्गमिश्रितैस्त्रिभिस्त्रिभिः कुशैः पृथक् २ गायत्रीं पठित्वा ब्रह्मग्रन्थियुक्ताः सप्तर्षयः कार्याः । ते च पीठे न-वंसदृशं धौतवस्त्रं रम्भापत्रं वा प्रसार्य तस्मिन्प्रागग्रा उदगग्रा वा स्थापनीयाः ॥

इति मंत्रैः करस्थित अक्षतान्निक्षिपेत् ऋष्युपरि । पुनः हस्ते पुष्पाक्षतान् गृहीत्वा पृथक् २ आवाहनं कुर्यात् ।

ॐ भूर्भुवः स्वः कश्यपाय नमः कश्यपं आवाहयामि-स्थापयामि । भोकश्यपइहागच्छेहतिष्ठपूजांगृहाणममसंमुखः सुप्रसन्नो वरदोभव ॥ १ ॥ ॐ भूर्भुवःस्वः अत्रये नमः अत्रिं आवाहयामिस्थापयामि । भो अत्रे इहागच्छइहतिष्ठ पूजांगृहाण मम संमुखः सुप्रसन्नो वरदोभव ॥ २ ॥ ॐ भूर्भुवः स्वः भरद्वाजाय नमः भरद्वाजं आवाहयामिस्थापयामि । भो भरद्वाजइहागच्छइहतिष्ठपूजांगृहाणममसंमुखः सुप्रसन्नो वरदोभव ॥३॥ ॐ भूर्भुवः स्वः विश्वामित्राय नमःविश्वामित्रं आवाहयामिस्थापयामि । भोविश्वामित्र इहागच्छइहतिष्ठ पूजांगृहाणममसंमुखः सुप्रसन्नोवरदोभव ॥४॥ ॐ भूर्भुवः स्वः गौतमाय नमः गौतमं अवाहयामिस्थापयामि । भो ग तमइहागच्छ इहतिष्ठपूजांगृहाणममसंमुखः सुप्रसन्नो वददोभव ॥५॥ ॐ भूर्भुवः स्वः वसिष्ठाय नमः वसिष्ठं आवाहयामिस्थापयामि । भो वसिष्ठइहागच्छइहतिष्ठ पूजांगृहाण ममसंमुखः सुप्रसन्नो वरदोभव ॥६॥ ॐभूर्भुवः स्वःयमदग्नये नमः । यमदग्निमावाहयामिस्थापयामि, भो यमदग्ने इहागच्छ इहतिष्ठ पूजांगृहाण ममसंमुखः सुप्रसन्नो वरदोभव ॥७॥ ॐ भूर्भुवः स्वः अरुन्धत्यै नमःअरुन्धतीं आवाहयामिस्थापयामि भोअरुरुन्धति इहागच्छ इहतिष्ठ पूजांगृहाण ममसंमुखः सुप्रसन्ना वरदामव ॥८॥ तत्रैव ॥

ॐ भूर्भुवः स्वः याज्ञवल्क्याय नमः याज्ञवल्क्यं आवाहया-मिस्थापयामि । भों याज्ञवल्क्य इहागच्छ इहतिष्ठ पूजां-गृहाण ममसंमुखः सुप्रसन्नो वरदो भव ॥ ६ ॥

पुष्पाक्षतान् गृहीत्वा ।

ॐसहस्रशीर्षापुरुषः सहस्राक्षःसहस्रपात् । सभूमिर्ठं० सर्वतस्पृत्वात्यतिष्ठद्दशांगुलम् ॥ १ ॥ ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादि सप्तऋषिभ्यो नमः आवाह-नार्थे अक्षतान् समर्पयामि नमः ॥

आसनार्थे पुष्पाणि गृहीत्वा ।

सुवर्णघटितं दिव्यं नानारत्नसमन्वितम् । आसनं रुचिरं यच्च गृह्यतां भो मुनीश्वराः ॥ ॐ पुरुषएवेदर्ठं०सर्वं यद्भूतंयच्चभाव्यम् । उतामृतत्वस्येशानोयदन्नेनातिरोहति । ॐ भूर्भुवः स्वः अरुन्धतीसहित कश्यपादि सप्तऋषिभ्यो नमः । आसनं समर्पयामि नमः ॥

पाद्यम् ।

गङ्गाजलं समानीतं गन्धद्रव्येण संयुतम् । पाद्यार्थं प्रतिगृह्णन्तु कश्यपाद्यामहर्षयः ॥ ॐएतावानस्य महिमातो ज्यायांश्च पुरुषः । पदोस्य विश्वाभूतानि त्रिपादस्यामृत-न्दिवि ॥ ॐ भूर्भुवः । स्वः अरुन्धती सहित कश्यपादि सप्तऋषिभ्यो नमः पादयोः पाद्यं समर्पयामि नमः ॥

अर्घ्यम् ।

सुवर्णपात्रसंयुक्तं गन्धपुष्पाक्षतैर्युतम् । सप्तर्षयः

प्रतिगृह्णन्तु इदमर्घ्यंमयार्पितम् । ॐ त्रिपादूर्ध्वं उदैत्पुरुषः पादोस्येहा भवत्पुनः । ततो विष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ ॐभूर्भुवः स्वःअरुन्धति सहित कश्यपादि सप्त-ऋषिभ्यो नमः हस्तयो अर्घ्यं समर्पयामि नमः ।

आचमनम् ।

कर्पूरवासितंतोयंसुवर्णकलशेस्थितम् । दत्तमाचमनीयं च ऋषीणां प्रीतयेसदा ॥ ॐ ततोविराडजायत विराजो ऽअधिपूरुषः । सजातोऽअत्यऽरिच्यतपश्चाद्‌भूमिमथोपुरः । ॐ भुर्भुवः स्वः अरुन्धति सहित कश्यपादिसप्तऋषिभ्यो नमः मुखे आचमीनयं समर्पयामि नमः ।

अथ स्नानम् ।

सुगन्धि द्रव्य संयुक्तम् पवित्रं मंगलं जलम् । स्नानार्थं वः समानीतं मुनयःप्रतिगृह्यताम् ॥ ॐ तस्माद्यज्ञात्सर्वहुतः संभृतंपृषदाज्यम् । पशूंस्तांश्चक्रेवायव्यानारण्याग्राम्याश्चये । ॐ भूर्भुवः स्वः अरुन्धतिसहित कश्यपादि सप्तऋषिभ्यो नमः स्नानं समर्पयामि नमः ।

पंचामृत स्नानम् ।

पयो दधिघृतं चैव मधु च शर्करान्वितम् । पंचामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम् ॥ ॐ पंचनद्यः सरस्वती मपियंतिसस्रोतसः । सरस्वतीतु पंचधासोदेशेभवत्सरित् ॥

ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादि सप्तऋषिभ्यो नमः पंचामृतस्नानम् समर्पयामि नमः ॥

गंध ( चन्दनं युक्त जलसे ) स्नानम् ।

मलयाचलसंभूतं चन्दनागरु संभवम् । चन्दनं तु ऋषिश्रेष्ठाः स्नानार्थं प्रतिगृह्यताम् ॥ ॐ गंधद्वारांदुराधर्षां नित्यपुष्टांकरीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वयेश्रियम् ॥ ॐभुर्भुवः स्वः अरुन्धती सहित कश्यपादि सप्तऋषिभ्योनमः । गंधस्नानं समर्पयामि नमः ॥ अत्र सहस्र शीर्षेति षोडश ऋग्भिः अभिषेकं कुर्यात् ॥ ॐ भर्भुवः स्वः अरुन्धती सहित कश्यपादि सप्तर्षिभ्यो नमः । महाऽभिषेक स्नानं समर्पयामि नमः । स्नानान्ते आचमनीयं समर्पयामि नमः ॥

वस्त्रं ।

सूक्ष्माण्यतीवशुभ्राणि वस्त्राणिविविधानि च । ऋषयः प्रतिगृह्णन्तु उष्णशीतनिवारणे ॥ ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः सामानियज्ञिरे । छन्दांथ्ं सियज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ॐ भूर्भुवः स्वः अरुन्धती सहित सप्तर्षिभ्यो नमः वस्त्रोपवस्त्रं समर्पयामि नमः [ अभावे वस्त्रोपवस्त्रार्थे अलंकरणार्थे कौसुम्भसूत्रं साचतञ्च समर्पयामि नमः ]

यज्ञोपवीतं।

नानामंत्रैःसमुद्भूतं त्रिवृतंब्रह्मसूत्रकम् । प्रत्येकं दीयतेस्वच्छ ऋषयःप्रतिगृह्यताम् ॥ ॐतस्मादश्वाऽअजायन्तयेके चोभयादतः । गावोहयज्ञिरेतस्मात्तस्माज्जाताऽअजावयः ॥ ॐ भूर्भुवः स्वः अरुन्धतीसहित सप्तर्षिभ्यो नमः यज्ञोपवीतं समर्पयामि नमः ॥

गंधं।

आत्मसंतापहरं च सुगंधद्रव्यसंयुतम् ॥ चन्दनं तत्प्रयच्छामि ऋषीणांप्रीतिहेतवे ॥ ॐ तंयज्ञंवर्हिषिप्रौक्षन्पुरुषं जातमग्रतः तेनदेवाऽअयजन्तसाध्याऽऋषयश्चये । ॐ भूर्भुवः स्वः अरुन्धतीसहित सप्तर्षिभ्यो नमः गन्धं विलेपयामि नमः ॥

अक्षतान्।

शुभ्रतंदुलजाः शुक्लाःशंखशुभ्रामनोरमाः । अक्षतान्संप्रयच्छामि गृह्णन्तुमुनिपुंगवाः॥ ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत । अस्तोषतस्वभानवो विप्रानविष्ठयामतीयोजान्विन्द्रते हरी ॥ ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादि सप्तर्षिभ्यो नमः अक्षतान्समर्पयामि नमः ॥

पंचगंधादि सौभाग्यद्रव्याणि।

हरिद्राकुंकुमंचैव कज्जलं भूषणानि च । कंकणं कण्ठसूत्रं च गृहाण परमेश्वरि ॥

ॐ अहिरिवभोगैःपर्येतिवाहुँज्यायाहेतिंपरिवाधमानः॥हस्तघ्नो विश्वाव्वयुनानि विद्वान्पुमान्पुमाᳫंसंपरिपातु विश्वतः ॥ ॐ भूर्भुवः स्वः अरुन्धती सहित कश्यपादि सप्तर्षिभ्यो नमः पंचगंधादि सौभाग्यद्रव्याणि समर्पयामि नमः ॥

पुष्प, पुष्पमाला[1]

माल्यादीनिसुगंधीनि मालत्यादीनिसत्तमाः । मयाविंतानि पुष्पाणि गृह्णन्तु मुनिपुङ्गवाः ॥ ॐ यत्पुरुषंव्यदधुः-कतिधाव्यकल्पयन् । मुखं किमस्यासीत्किंवाहूकिमूरूपादा-ऽउच्येते ॥ ॐ भुर्भुवः स्वः अरुन्धती सहित कश्यपादि सप्तर्षिभ्यो नमः पुष्पाणि समर्पयामि नमः ॥

धूपम् ।

कृष्णागरुसमुद्भूतो धूपोयं च दशाङ्गकः । सुगंधः कश्यपादिभ्य ऋषिभ्योदीयतेऽधुना ॥ ॐ ब्राह्मणोस्य मुखमासीद् वाहू राजन्यः कृतः । उरूतदस्ययद्वैश्यः पद्भ्याᳫं शूद्रोऽअजायत ॥ ॐ भूर्भुवःस्वः अरुन्धती सहित कश्यपादि सप्तऋषिभ्यो नमः धूपमाघ्रापयामि नमः । धूपपात्रोपरि अक्षतान् प्रक्षिपेत् ॥ पुनः हस्तौ प्रक्षाल्य ॥

---

(१) तुलसीदलानि विल्वपत्राणि कमलानि च ऋषिभ्यो विशेषतः समर्पयामि ।

दीपं।

घृतवर्तिसमायुक्तः सर्वमंगल शोभनः। मयानिवेदितोभक्त्या दीपोऽयंप्रतिगृह्यताम् ॥ ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्योऽअजायत। श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥ ॐ भूर्भुवः स्वः अरुन्धतीसहितसप्तऋषिभ्यो नमः प्रत्यक्ष दीपं दर्शयामि नमः॥ हस्तौ प्रक्षाल्य॥

नैवेद्यं।

फल मूल समायुक्तं नानाशाक समन्वितम्। शर्करा घृत संयुक्तं नैवेद्यं प्रति गृह्यताम्। ॐ नाभ्याऽआसीदन्तरिक्षर्ठ०शीर्ष्णोद्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकांरअकल्पयन्॥ जलेनाभ्युक्ष्यगंधपुष्पाभ्यामाच्छाद्य॥ धेनुमुद्रयाअमृतीकृत्य ग्रासमुद्रांप्रदर्श्य ॐ प्राणाय स्वाहा ॥१॥ ॐ अपानाय स्वाहा॥२॥ उदानाय स्वाहा॥३॥ ॐ व्यानाय स्वाहा॥४॥ समानाय स्वाहा॥ ५॥ मध्ये मध्ये आचमनीयं समर्पयामिउत्तरापोषणार्थे किंचिन्नैवेद्यं समर्पयामि नमः॥ ॐ भूर्भुवः स्वः अरुन्धती सहित सप्तर्षिभ्यो नमः नैवेद्यं निवेदयामि नमः।

पुनराचमनीयम्।

सर्वतीर्थसमायुक्तं सुगन्धि निर्मलं जलं। आचम्यतां मयादत्तंगृहीत्वा च ऋषीश्वराः। ॐ यत्पुरुषेण हविषादेवा यज्ञमतन्वत। वसन्तोस्यासीदाज्यं ग्रीष्मऽइध्मःशरद्धविः॥

ॐभूर्भुवः स्वः अरुन्धती सहित सप्तऋषिभ्यो नमः । पुनराचमनीयंसमर्पयामिनमः । हस्तप्रक्षालनं मुखप्रक्षालनं समर्पयामि नमः । करोद्वर्तनार्थेचन्दनंचसमर्पयामि नमः ।

ऋतुफलम् ।

नारिकेलं च कूष्माण्डं कदलीकर्कटीफलम् । ऋतुकालोद्भवंचान्यद्गृह्यतांऽद्यमुनीश्वराः । ॐयाःफलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः । बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वंहसः । ॐभूर्भुवः स्वः अरुन्धती सहित कश्यपादि सप्तऋषिभ्यो नमःऋतूद्भव फलानि समर्पयामि नमः ।

ताम्बूलम् ।

पुंगीफलम् सकर्पूरं नागवल्लीदलैर्युतम् । एलालवंग संयुक्तं ताम्बूलं प्रतिगृह्यताम् । सप्तास्यासन्परिधय स्त्रिः-सप्तसमिधः कृताः । देवायद्यज्ञं तन्वानाऽअबध्नं पुरुषं पशुम् । ताम्बूलं पुंगीफलं समर्पयामि नमः ॥

दक्षिणाद्रव्यम् ।

हिरण्यगर्भ गर्भस्थं हेमबीजं विभावसो । अनन्तपुण्य फलदमतः शांतिं प्रयच्छ मे ॥ ॐहिरण्यगर्भःसमवर्त ताग्रे भूतस्यजातः पतिरेकऽआसीत् । सदाधार पृथिवींद्यामुतेमां कस्मै देवाय हविषा विधेम ॥ ॐभूर्भुवः स्वः अरुन्धती सहित सप्तऋषिभ्यो नमः दक्षिणाद्रव्यं समर्पयामि नमः ।

ध्यानम् ।

ॐ इदं विष्णुर्विचक्रमे त्रेधानिदधेपदम् । समूढमस्यपाᳬसुर स्वाहा ॐ सप्तऋषयः प्रतिहिताः शरीरे सप्तरक्षन्ति-सदमप्रमादम् । सप्तापः स्वपतोंलोकमीयुस्तत्र जागृतों ऽस्वप्नजौसत्रसदौ च देवौ ॥ ॐ इमौ गौतम भरद्वाजा-वयमेवगौतमोयं भरद्वाज इमावेवविश्वामित्रवसिष्ठ कश्यपा वयमेव वसिष्ठोयं कश्यपो वागेवात्रिर्वाचाह्युन्नमतेत्रिर्हवैना-मैतद्यदत्रिरिति सर्वस्यात्ताभवति सर्वमस्यान्नं भवति एवं वेद ॥ शरणागतदीनार्त परित्राण परायणाः । रक्षन्तु मुनयः सर्वे मामद्यशरणागतम् ॥ सप्तर्षयः शुभाः श्रेष्ठाः सर्वेषां च शुभप्रदाः । पुष्पाञ्जलिं मयादत्तं गृह्णन्तु मुनिसत्तमाः ॥ कृतेनानेनमयावेदो-त्सर्जनांगत्वेन ध्यानावाहनादिषोडशोप (यथोप) चारादि पूजनेन अरुन्धती सहित कश्यपादि सप्तर्षिभ्यो नमःप्रीय न्तां नमम । ॐ तत्सद् ब्रह्मार्पणमस्तु ।

अपसव्यो भूत्वा स्वपितृभ्यो[1] यज्ञोपवीत दानम् ।

तिथिवाराद्युच्चार्य अमुकगोत्रेभ्यो अस्मत्पितृपितामह-प्रपितामहेभ्यः तथाअमुकगोत्रेभ्यअस्मन्मातामह प्रमाता-मह वृद्धप्रमातामहेभ्यः तथा कव्यवाडनलादिदिव्य पितृभ्य

---

१—प्राचीनावीती दक्षिणाभिमुखाः सर्वे कुशोदकं गृहीत्वा पुरतो यज्ञोपवीतानि निधाय ॥

इमानियज्ञोपवीतानि स्वधा संपद्यंताम् । इति ऋष्युपरिस-मर्पयेत् ॥ जीवत्पितृकैरपि पितुःपित्रादिभ्य मातामहादि-भ्यश्चयज्ञोपवीतानिदेयानि । ततःसव्यंकृत्वासर्वान्ब्राह्मणान् गंधादिना सम्पूज्य तेभ्यो यज्ञोपवीतानि दत्वा पश्चात्सर्वैः स्वयमपिधार्याणि ततोयज्ञोपवीतानिशिरोमार्गेणनिस्सार्यं ॥

ततः----यज्ञोपवीतधारण प्रयोगः ।

आचम्य प्राणानायम्य संकल्पं कुर्यात् ।

शुभे श्रावणमासे शुक्लपक्षे पूर्णिमायां अमुकवासरे अमुकगोत्र अमुकनामशर्म्माहं श्रौतस्मार्त-कर्मानुष्ठानसि-द्धयर्थं तथा च उपाकर्माङ्गत्वेनयज्ञोपवीतधारणमहंकरिष्ये ॥

ततः उपवीतानिप्रक्षाल्य दशवारं गायत्री मन्त्रेणाभिमंत्र्य । पुनः जलमादाय च ।

ॐ कारस्य ब्रह्मा ऋषिः परमात्मा देवता गायत्री छन्दः अग्निम्दूतमितिमन्त्रस्य मेधातिथिऋषिरग्नि-र्देवता गायत्रीछन्दः नमोस्तुसर्पेभ्य इत्यस्य प्रजापति-ऋषिः सर्पा देवता अनुष्टुप्छन्दः वयर्ठ०सोमेत्यस्य वन्धु-ऋषिः सोमोदेवता गायत्रीछन्दः, उदीरितामित्यस्य शङ्ख ऋषिः पितरोदेवताः प्रजापते इत्यस्य हिरण्यगर्भ ऋषिः प्रजापतिर्देवता आनो इत्यस्य वसिष्ठऋषिरनिलोदेवता, सुगावइत्यस्यात्रिर्ऋषिर्गृहपतयोदेवता, विश्वेदेवास इत्यस्य मधुश्छन्दा ऋषिर्विश्वेदेवता, त्रिष्टुप्छन्दः, क्रमेण नवसु तन्तुषु ओङ्काराद्यावाहने विनियोगः ।

ॐअग्निन्दूतम्पुरोदधे हव्यवाहमुपब्रुवे। देवाँऽआसादयादिह ॥ ॐनमोस्तुसर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवितेभ्यः सर्पेभ्यो नमः। ॐ वयठं॰ सोमव्रते तवमनस्तनूषुबिभ्रतः। प्रजावन्तःसचेमहि ॥ॐउदीरतामवरऽउत्परासऽउन्मध्यमाःपितरःसोम्यासः। असुंयऽईयुरवृकाऽऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥ ॐप्रजापते नत्वदेतान्यन्यो-विश्वारूपाणिपरिता बभूव। यत्कामास्ते जुहुमस्तन्नोऽअस्तु वयठं॰ स्याम पतयोरयीणाम् ॥ ॐआनो नियुद्भिःशतिनी-भिरध्वरठं॰सहस्रिणीभिरुपयाहि यज्ञम्। वायो अस्मिन्त्स-वने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥ ॐसुगावो देवाः सदनाऽअकर्म्मय आजग्मेदठं॰सवनञ्जुषाणा। भर-माणा वहमाना हवीᳬंष्यस्मे धत्त वसवो वसूनि स्वाहा ॥ ॐविश्वे देवासऽआगतशृणुतामऽइमठं॰हवम् एदंवर्हिर्नि-षीदत ॥ ॐ अग्निसर्पसोमपितृप्रजापतिवह्नि यमविश्वेदेवाः नवसु तन्तुषुक्रमेणेहागच्छत इहतिष्ठत ;

इति यज्ञोपवीतानामुपरअक्षतान् क्षिपेत्। ततः करे जलमादाय।

ॐ ब्रह्मयज्ञानमिति मन्त्रस्य प्रजापतिर्ऋषिर्ब्रह्मादेवता इदं विष्णुरित्यस्य मेधातिथिर्ऋषिर्विष्णुर्देवतागायत्रीछन्दः त्र्यम्बकमित्यस्यवशिष्ठऋषिःरुद्रोदेवतात्रिष्टुप्छन्दोग्रन्थिषु ब्रह्माद्यावाहने विनियोगः।

इति जलं क्षिपेत् । पुनरक्षतानादाय ।

ॐ ब्रह्मयज्ञानम्प्रथमं पुरस्ताद्विसीमतः सुरुचोवेनऽआवः । सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः ॥ ॐ इदं विष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूढमस्यपाᳪं सुरे स्वाहा ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ब्रह्माविष्णु रुद्रा इहग्रन्थिषु आगत्यसुप्रतिष्ठता भवन्तु ।

इत्यक्षतान् क्षिपेत्

यज्ञोपवीत ग्रन्थिदेवताभ्यो नमः ॥ यथा २ स्थान महंन्यसामि, यथोपचारैर्गानसोपचारैर्वा संपूज्य ।

ध्यानम् ।

ॐ प्रजापतेर्यत्सहजं पवित्रं कार्पाससूत्रोद्भवब्रह्मसूत्रं ॥ ब्रह्मत्वसिद्ध्यै च यशःप्रकाशं जपस्यसिद्धिंकुरुब्रह्मसूत्रम् ॥ ॐ युवासुवासाः परिवीतऽआगात्सऽउश्रेयान्भवति जायमानः ॥ तन्धीरासःकवयऽउन्नयन्तिस्वाध्योमनसादेवयन्तः ॥

अथ यज्ञोपवीतधारणम् ।

ॐ यज्ञोपवीतमितिमंत्रस्य परमेष्ठीऋषिः लिङ्गोक्ता देवता त्रिष्टुप्छन्दः यज्ञोपवीतधारणे विनियोगः ॐ यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्चशुभ्रं यज्ञो पवीतंबलमस्तु तेजः ॥ यज्ञोपवीतमसि यज्ञस्यत्वा यज्ञोपवीतेनोपनह्यामि ॥

अनेन मन्त्रेण यज्ञोपवीतं पृथक् २ धारणं कुर्यात् ॥

प्रतियज्ञोपवीतधारणे स्याद्यन्तयोराचमनम् धारणा-न्तंजीर्णसूत्रत्यागमन्त्रः ॥ एतावद्दिनपर्यन्तं ब्रह्मत्वंधारितं मया। जीर्णत्वाच्च परित्यागो गच्छ सूत्र यथासुखम् ॥

इति शिरोमार्गेणत्यागः पश्चाद्यथाशक्ति गायत्री जपं कुर्यात्। ॐ तत्सद् ब्रह्मार्पणमस्तु ॥

अथोत्सर्गाङ्गभूतं तर्पणम्। तत्रादौ कर्ता सकुशः सन् आसने प्राङ् मुखः उदङ् मुखो वोपविश्याचम्य प्राणानायम्य साक्षतं सद्रव्यं जलमादाय च।

ॐ तत्सत् ३ श्रीमद्भगवतोमहापुरुषस्याज्ञया प्रवर्तमानस्याद्य ब्रह्मणोद्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वत मन्वन्तरेऽष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखंडे आर्य्यावर्तेऽमुकपुन्यक्षेत्रे [अमुकपुन्यक्षेत्रान्तर्गतवा] अमुकदेशेऽमुकनगरेऽमुकगोत्रोऽमुकनामाऽहमात्मनः एतत्स्थूलशरीरावरोधेन सुकृतोदयफलप्राप्तिपूर्वकं छन्दसां कचिदनध्यायादिकाले पठनादनधिकारिभिः श्रावणाच्च प्राप्तमालिन्यस्य निरासार्थमुत्सर्गाङ्गभूतं तर्पणं करिष्ये ॥

इति जलं क्षिपेत्। तथा साञ्जलिः।

ॐ विश्वेदेवासऽआगतश्रृणुतामऽइमठं॰हवम् ॥ एदम्बर्हिर्निषीदत ॥ ॐ विश्वेदेवाःश्रृणुतेमठं॰हवम्मे येऽअन्तरिक्षे येऽउपद्यविष्ट ॥ येऽअग्निजिह्वाऽउतवाय जत्राऽआसद्यास्मिन् बर्हिषि मादयध्वम् ॥

इत्यावाहयेत्। ततःसाक्षतेन जलेनाञ्जलिंपूरयित्वा सकुश-पवित्रः सव्यः सन् दक्षिणं जान्वाच्येशान्याभिमुखः सव्येन प्रागग्रैर्दर्भैर्देवतीर्थेन देव तर्पणं कुर्यात्। यथा—

ॐ ब्रह्मादयोदेवास्तृप्यन्ताम् । १ ॐ छन्दांसि तृप्यन्ताम् १ ॐ वेदास्तृप्यन्ताम्। १ ॐ ऋषयस्तृप्य-न्ताम्। १ ॐ पुराणाचार्यास्तृप्यन्ताम् १ ॐ गन्धर्वा-स्तृप्यन्ताम्। १ ॐ इतराचार्यास्तृप्यन्ताम्। ॐ संवत्सरः सावयवस्तृप्यताम् । १ ॐ पितरस्तृप्यन्ताम् । ॐ आचार्यास्तृप्यन्ताम्।

ततः—मृतपितृकः-अपसव्यः सन् दक्षिणाभिमुखः सतिलं जलमादाय।

अमुकगोत्रा अस्मत्पितृपितामहप्रपितामहा अमुका-अमुकशर्म्माणः वसुरुद्रादित्यरूपास्तृप्यध्वं स्वधा नमः ॥

इति त्रिवारं दद्यात्।

एवं मातामहादींश्च तर्पयेत् । जीवत्पितृकैःपुत्रैः शिष्यैश्चाचार्यस्य पितृतर्पणंकार्यम्। तद्यथा अमुकगोत्रा अस्मदाचार्यपितरस्तृप्यध्वं स्वधा नमः ॥

ततः सव्यः सन् आचम्य वंशानां वाचनम् विनियोगं कुर्यात् यथा।

ॐअयं पुर आदि पंचानां साध्या ऋषयो यजूंषि प्राणभृतो देवता। मूर्धादिद्वयोर्देवा ऋषयो यजूंषि लिङ्गोक्ता देवता माच्छन्दआदिषोडशानाम्परमेष्ठीऋषियजूंषि लिङ्गो-

क्ता देवता सप्तर्षय इत्यादित्ययाज्ञवल्क्यावृषी सप्तऋषयो देवता जगतीछन्दऋषितर्पणे विनियोगः ।

ऋषिणामुपरि तर्पणं कर्तव्यं ।

ॐ अयंपुरोभुवस्तस्य प्राणोभौवायनोव्वसन्तः प्राणायनोगायत्रीवासन्तीगायत्र्यै ॥ गायत्र्यङ्गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृतात्रिवृतोरथन्तरंव्वसिष्ठऋषिः प्रजापतिगृहीतया त्वया प्राणङ्गृह्णामिप्रजाभ्यः ॥ १ अयं दक्षिणाव्विश्वकर्म्मा तस्य मनो व्वैश्वकर्मणङ्ग्रीष्मोमानसस्त्रिष्टुब्ग्रैष्मी त्रिष्टुभः स्वारꣳस्वारादन्तर्य्यामोन्तर्यामात्पञ्चदशःपञ्चदशाद्बृहद्भरद्वाजऽऋषिः प्रजापतिगृहीतया त्वया मनोगृह्णामि प्रजाभ्यः ॥२॥ अयं पश्चाद्विश्वव्व्यचास्तस्यचक्षुर्वैश्वव्व्यचसंव्वर्षाश्चाक्षुष्योजगतीवार्षीजगत्याऽऋक्समम्ऋक्समाच्छुक्रःशुक्रात्सप्तदशः सप्तदशाद्वैरूपं जमदग्नि ऋषिः प्रजापतिगृहीतयात्वयाचक्षुर्गृह्णामिप्रजाभ्यः—॥३॥ इदमुत्तरात्स्वस्तस्यश्रोत्रꣳसौवꣳशरच्छ्रौत्र्यनुष्टुप्शारद्यनुष्टुभऽऐडमैडान्मन्थीमन्थिनऽएकविꣳशऽएकविꣳशाद्वैराजंविश्वामित्रऋषिः प्रजापतिगृहितयात्वयाश्रोत्रंगृह्णामिप्रजाभ्यः ॥ ४ ॥ इयमुपरिमतिस्तस्यैवाङ्मात्याहेमन्तोवाच्यः पङ्क्तिर्हैमन्तीपङ्क्त्यैनिधनवन्निधनवतऽआग्रयणऽआग्रयणात्त्रिणवत्रयस्त्रिꣳशौत्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वररैवतेविश्वकर्मऽऋषिः प्रजापतिगृहीतयात्वयावाचंगृह्णामि प्रजाभ्योलोकन्ताऽइन्द्रम्

॥५॥लोकम्पृण च्छिद्रम्पृणाथोसीदद्ध्रुवात्वम्। इन्द्राग्नीत्वा बृहस्पतिरस्मिन्न्योनावसीषदन् ॥६॥ ताऽअस्यसूददोहसः सोमठं॰श्रीणन्तिप्रश्नयः। जन्मन्देवानांव्विशस्त्रिष्वारोचने दिवः ॥७॥ इन्द्रं विश्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरः॥ रथीतमठं॰रथीनांव्वाजानाठं॰सत्पतिम्पतिम् ॥८॥मूर्धाव्वय
ःप्रजापतिश्छन्दः क्षत्रंव्वयोमयन्दञ्छन्दो व्विष्टम्भोव्वयो- धिपतिश्छन्दोव्विश्वकर्मावयः परमेष्ठीच्छन्दोवस्तोव्वयोव्वि- वलञ्छन्दोव्वृष्णिर्व्वयोविशालञ्छन्दःपुरुषोवयस्तन्द्रञ्छन्दो- व्याघ्रोव्वयोनाधृष्टञ्छन्दः सिठं॰ होव्वयश्छदिश्छन्द
ःपष्ठवाड्वयोबृहतीच्छन्द ऽउक्षाव्वयः ककुप्छन्दऽ- ऋषभोव्वयः सतोबृहतीच्छन्दोनड्वान्वयः ॥९॥ पङ्क्तिश्छन्दो धेनुर्व्वयोजगतीच्छन्दस्त्र्यविर्व्वयस्त्रिष्टुप्छ- न्दोदित्यवाड्वयोव्विराट्छन्दः पञ्चाविर्व्वयोगायत्रीच्छ- न्दस्त्रिवत्सोव्वयऽउष्णिक्छन्दस्तुर्य्यवाड्वयोनुष्टुप्छन्दोलो- कन्ताऽइन्द्रम् ॥१०॥माच्छन्दः प्रमाच्छन्दः प्रतिमाछन्दोऽ अस्त्रीव्वयश्छन्दः पंक्तिश्छन्दऽउष्णिक्छन्दो बृहतीच्छन्दोऽ नुष्टुप्छन्दोव्विराट्छन्दोगायत्री छन्दस्त्रिष्टुप्छन्दो जग- तीच्छन्दः ॥११॥ पृथिवीच्छन्दोन्तरिक्षञ्छन्दो द्यौश्छन्दः समाच्छन्दोनक्षत्राणिच्छन्दोव्वाक्छन्दोमनश्छन्दः कृषि- श्छन्दो हिरण्यञ्छन्दोगौश्छन्दोजाच्छन्दोश्वश्छन्दः ॥१२॥ अग्निर्देवतान्वातोदेवतासूर्योदेवताचन्द्रमादेवता-

व्वसवोदेवतारुद्रादेवतादित्या देवतामरुतोदेवताव्विश्वेदेवा-
देवताबृहस्पतिर्देवतेन्द्रोदेवताव्वरुणोदेवता ॥१३॥ एवच्छं-
दोव्वरिवच्छन्दः शम्भूश्छन्दः परिभूश्छन्दऽआच्छ-
च्छन्दोमनश्छन्दोव्यचश्छन्दः सिन्धुश्छन्दः समुद्रश्छन्दः
सरिरञ्छन्दः ककुप्छन्दस्त्रिककुप्छन्दः काव्यंछन्दोऽ
अंकुपञ्छन्दोक्षरपङ्क्तिश्छन्दः पदपङ्क्तिच्छन्दोव्वि-
ष्टारपङ्क्तिश्छंदः क्षुरोभ्रजश्छंदऽआच्छच्छदः ॥१४॥
प्रच्छच्छंदः संयच्छंदो व्वियच्छंदोबृहच्छंदोरथन्तरञ्छंदो
निकायश्छंदो व्विवधश्छंदो गिरश्छंदो भ्राजश्छंदः सꣳ
स्तुप्छंदन्दोनुष्टुप्छंदऽएवश्छंदो व्वरिवश्छंदो व्वयश्छंदो
व्वयस्कृच्छंदो व्विष्पर्द्धाश्छन्दो विशालञ्छन्दश्छदिश्छंदो
दूरोहणंछदस्तन्द्रञ्छंदऽअङ्काङ्कञ्छंदः ॥१५॥ रश्मिना
सत्यायसत्यञ्जिन्वप्रेतिनाधर्म्मणाधर्मञ्जिन्वान्वित्यादिवा-
दिवञ्जिन्वसन्धिनान्तरिक्षेणान्तरिक्षञ्जिन्व प्रतिधिनापृथि-
व्यापृथिवीञ्जिन्वविष्टम्भेनवृष्ट्यावृष्टिञ्जिन्वप्रवयान्हाहर्जिन्वा
नुयारात्र्यारात्रीञ्जिन्वोशिजाव्वसुभ्यो व्वसूञ्जिन्वप्रके-
तेनादित्येभ्यऽआदित्याञ्जिन्वतंतुनारायः ॥१६॥ तंतुनारा
यस्पोषेणरायस्पोषञ्जिन्वसꣳसर्प्पेण श्रुताय श्रुतञ्जिन्वै-
डेनौषधीभिरोषधीञ्जिन्वोत्तमेनतनूभिस्तनूञ्जिन्ववयोधसा-
धीतेनाधीतञ्जिन्वाभिजितातेजसातेजोजिन्व ॥१७॥ प्रति-
पदसिप्रतिपदेत्वानुपदस्यनुपदेत्वासम्पदसिसम्पदेत्वातेजो-

सितजसेत्वात्रिवृदसि ॥१८॥ त्रिवृदसित्रिवृतेत्वाप्रवृदसिप्रवृ तेत्वाव्विवृदसिविवृतेत्वासवृदसिसवृतेत्वाक्रमोस्याक्रमायत्वा सङ्क्रमोसिसङ्क्रमायत्वोत्क्रमोस्युत्क्रमायत्वोत्क्रान्तिरस्यु-त्क्रान्त्यैत्वाधिपतिनोर्ज्जोर्जिन्व ॥ १९ ॥ राड्यसिप्राची-विग्वसवस्तेदेवाऽअधिपतयोग्निर्हेतीनाम्प्रतिधर्त्तात्रिवृत्त्वास्तोमः पृथिव्या ᳪ श्रयत्त्वाज्ज्यमुक्थमव्यथायैस्तभ्नातुरथन्तरᳪ᳭ सामप्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्रथमजादेवेषुदिवो मात्त्रयावरिम्णाप्रथन्तुविधर्त्ताचायमधिपतिश्चतेत्वासर्व्वेस-म्विदानानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु ॥२०॥ व्विराड सिदक्षिणादिग्रुद्रास्तेदेवाऽअधिपतयऽइन्द्रोहेतीनाम्प्रतिधर्त्तापं दशस्त्वास्तोमःपृथिव्याᳪश्रयतुप्रउगमुक्थमव्यथायैस्तभ्नातुवृ हत्सामप्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्रथमजादेवेषुदिवोमात्र याव्वरिम्णाप्रथन्तुव्विधर्त्ताचायमधिपतिश्चतेत्वासर्व्वेसंविदा नानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु ॥२१॥ सम्राडसि प्प्रतीची दिगादित्यास्तेदेवाऽअधिपतयोवरुणोहेतीनाम्प्रति-धर्त्तासप्तदशस्त्वास्तोमःपृथिव्याᳪश्रयतुमरुत्वतीयमुक्थम-व्यथायैस्तभ्नातुव्वैरूपᳪ᳭ सामप्रतिष्ठित्याऽअन्तरिक्षऽऋषय-स्त्वाप्रथमजादेवेषुदिवोमात्त्रयाव्वरिम्णाप्रथन्तुव्विधर्त्ता-चायमधिपतिश्चतेत्वासर्वेसंव्विदानानाकस्यपृष्ठेस्वर्गेलोकेय-जमानञ्चसादयन्तु ॥२२॥ स्वराडस्युदीचीदिङ्मरुतस्तेदे-वाऽअधिपतयः सोमोहेतीनाम्प्रतिधर्त्तैकविᳪ᳭शस्त्वास्तोमः

पृथिव्याᳪं अयतु निष्केवल्यमुक्थमव्यथायै स्तभ्नातु वैराजᳪं सामप्रतिष्ठित्या ऽअन्तरिक्ष ऽऋषयस्त्वा प्रथमजा देवेषु दिवोमात्रया वरिम्णा प्रथन्तु विधर्त्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्ग्गे लोके यजमानञ्च सादयन्तु ॥२३॥
अधिपत्न्यसि बृहती दिग्विश्वे ते देवा ऽअधिपतयो बृहस्पतिर्हेतीनाम्प्रतिधर्त्ता त्रिणवत्रयस्त्रिᳪंशौ त्वा स्तोमौ पृथिव्याᳪं अयतां वैश्वदेवाग्निमारुते ऽउक्थे ऽअव्यथायै स्तभ्नीताᳪं शाक्वररैवते सामनी प्रतिष्ठित्या ऽअन्तरिक्ष ऽऋषयस्त्वा प्रथमजा देवेषु दिवोमात्रया वरिम्णा प्रथन्तु विधर्त्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्ग्गे लोके यजमानञ्च सादयन्तु ॥२४॥
अयम्पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ ॥ पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिस्तेभ्यो नमो ऽअस्तु ते नो ऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ २५ ॥ अयं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्यौ ॥ मेनका च सहजन्या चाप्सरसौ यातुधाना हेती रक्षाᳪं सि प्रहेतिस्तेभ्यो नमो ऽअस्तु ते नो ऽवन्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥२६॥
अयम्पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्यौ ॥ प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ व्याघ्रा हेतिः सर्पाः प्रहेतिस्तेभ्यो नमो ऽअस्तु ते नो ऽवन्तु ते नो मृडयन्तु ते यं-

द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः॥ २७॥अयमुत्तरात्संयद्वसुस्तस्यतार्क्ष्यश्चारिष्टनेमिश्चसेनानीग्रामण्यौ ॥ विश्वाचीचघृताचीचाप्सरसावापोहेतिर्व्वातः प्रहेतिस्तेभ्यो नमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयंद्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥२८॥ अयमुपर्य्यर्व्वाग्वसुस्तस्यसेनजिच्चसुषेणश्चसेनानीग्रामण्यौ ॥ उर्वशीचपूर्व्वचित्तिश्चाप्सरसाववस्फूर्ज्जन्हेतिर्व्विद्युत्प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयं द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ २९ ॥ सप्तऋषयः प्रतिहिताः शरीरे सप्तरक्षन्ति सदम प्रमादम् ॥ सप्तापः स्वपतोलोकमीयुस्तत्रजाग्रतोऽअस्वप्नजौ सत्रसदौ च देवौ ॥३०॥ मंत्रोक्ताऋषयस्तृप्यन्ताम् ॥

इति अञ्जलिं दद्यात् । पुनरप्येवम् अञ्जलिं जलेनपूरयित्वा अथ वंशऋषयः ।

ॐ अथवᳩ॑शः समानमासाञ्जीवीपुत्रात्साञ्जीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सोमाहित्थेर्माहित्थिर्व्वामकक्षायणाद्वामकक्षायणोव्वात्स्याद्वात्स्यःशाण्डिल्याच्छाण्डिल्यःकुश्रेः कुश्रिर्यज्ञवचसोराजस्तंबायनाद्यज्ञवचाराजस्तंबायनस्तुरात् । कावषेयात्तुरःकावषेयः प्रजापतेःप्रजापतिर्ब्रह्मणोब्रह्मस्वयम्भु ब्रह्मणेनमः ॥ १॥
ॐ वंशोक्ताऋषयस्तृप्यन्ताम् ॥ १ ॥

इत्यञ्जलिं दत्वा पुनस्तथैवपूरयित्वा ।

अथवर्ठ०शस्तदिदंवयठ०शौर्पण्याच्छौर्पण्योंगौ-
तमाद्गौतमोऽवात्स्याद्वात्स्योंऽवात्स्याच्चपाराशर्य्याच्चपारा-
शर्य्यःसाङ्कृत्याच्च भारद्वाजाच्च भारद्वाजऽऔदवाहेश्चशाण्डि-
ल्यश्चाशांडिल्योवैजवापाच्चगौतमाच्चगौतमोवैजपायनाच्च—
वैष्टपुरेयाच्चवैष्टपुरेयः शाण्डिल्याचरौहिणायनाच्चरौहिणायनः
शौनकाच्चत्रेयाच्चरैभ्याच्चरैभ्यःपौतिमाष्यायणाच्च कौण्डिन्या-
यानच्च कौण्डिन्यायनः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्या-
त्कौण्डिन्यः कौण्डिन्याच्चाग्निवेश्याच्च ॥ १ ॥ आग्निवे-
श्यः सैतवात्सैतवः पाराशर्य्यात्पाराशर्योजातूकर्ण्याज्जातू-
कर्ण्योभारद्वाजाद्भारद्वाजोभारद्वाजाच्चासुरायणाच्च गौतमाच्च-
गौतमोभारद्वाजाद्भारद्वाजो वैजवापायनाद्वैजवापायनः
कौशिकायनेः कौशिकायनिघृतकौशिकाद्घृतकौशिकः
पाराशर्य्यायणात्पाराशर्य्यायणः पाराशर्य्यात्पाराशर्योजातू-
कर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजोभारद्वाजाच्चासुराय-
णाच्च यास्काच्चासरायणस्त्रैवणेस्त्रैवणिरौपजंन्घनेरौपजन्घ-
निरासुरेरासुरिर्भारद्वाजाद्भारद्वाजऽआत्रेयात् ॥ २॥ आत्रे-
योंमाण्टेर्माण्टिर्गौतमाद्गौतमोगौतमाद्गौतमोऽवात्स्याद्वा-
त्स्यः शाण्डिल्याच्छांडिल्यः कैशोर्यात्काप्यात्कैशोर्यः
काप्यःकुमारहारितात्कुमारहारितोगालवाद्गालवोविदर्भी-
कौण्डिन्याद्विदर्भीकौण्डिन्योवत्सनपातोवाभ्रवाद्वत्सनपातो
बाभ्रवः पथः सौभरात्पन्थाःसौभरोऽयास्यादाङ्गिरसादयास्य

आङ्गिरसऽआभूत्तेस्त्वाष्ट्रादाभुतिस्त्वाष्ट्रोविश्वरूपात्त्वा-
ष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीचऽआथर्वणा-
द्ध्यङ्ङाथर्वणोदैवादथर्वादैवोमृत्योःप्राध्वंसनान्मृत्युः
प्राध्वंसनः प्रध्वंसनात्प्राध्वंसनऽएकर्षेरेकर्षिर्विप्र
चित्तेर्विप्रजित्तिर्व्यष्ठेर्व्यष्टिः सनारोःसनारुः सनातनात्सना
तनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्मस्वयं
भुब्रह्मणेनमः ॥ ३ ॥ ॐ वंशोक्ताऋषयस्तृप्यन्ताम् ॥

इत्यञ्जलिं दत्वा पुनस्तथैवपूरयित्वा ।

अथवंशः तदिदं वयं शौर्पणाय्याच्छौर्पणाय्यो-
गौतमाद्गौतमोवात्स्याद्वात्स्योवात्स्याच्च पाराशर्याच्चपारा-
शर्य्यःसाङ्कृत्याच्चभारद्वाजाच्च भारद्वाजऽऔदवाहेश्चशाण्डि
ल्याच्चशाण्डिल्योवैजवापाच्चगौतमाच्च गौतमोवैजवापायना-
च्चवैष्टपुरेयाच्चवैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च
रौहिणायनः शौनयाच्चजैवन्तायनाच्चरैभ्याच्चरैभ्यः पौति
माष्यायणाच्चकौण्डिन्यायनाच्चकौण्डिन्यायनः कौण्डिन्या
भ्यांकौण्डिन्याऔर्णवाभेभ्यऽऔर्णवाभाः कौण्डिन्यात्कौ-
ण्डिन्यः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्याच्चाग्निवेश्याच्च
॥ ४॥आग्निवेश्यःसैतवात्सैतवः पाराशर्यात्पाराशर्य्योजातूक-
र्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजोभारद्वाजाच्चासुरायणा
च्चगौतमाच्चगौतमो भारद्वाजाद्भारद्वाजोवलाकाकौशिकाद्व-
लाकाकौशिकः काषायणात्काषायणः सौकरायणात्सौक-

रायणस्त्रैवणेस्त्रैवणिरौपजंघनेरौपजंघनिः सायकायनात्सा-
यकायनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्घृतकौ-
शिकः पाराशर्य्यायणात्पाराशर्यायणः पाराशर्यात्पाराश-
र्य्योजातूकर्ण्याज्जातूकर्ण्योभारद्वाजाद्भारद्वाजो भारद्वा-
जाद्वासुरायणाच्चयास्काद्वासुरायणस्त्रैवणेस्त्रैवणिरौपजंघने
रौपजंघनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजऽआत्रेयात् ॥५॥
आत्रेयादात्रेयोमाण्टेर्माण्टिर्गौतमाद्गौतमोगौतमाद्गौतमो
वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्
काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहा-
रितोगालवाद्गालवो विदर्भीकौण्डन्याद्विदर्भी कौण्ड-
न्यो वत्सनपातोबाभ्रवाद्वत्सनपाद्बाभ्रवः पथःसौभरात्पं
थाःसौभरोऽयास्यादांगिरसादयस्यऽआङ्गिरसऽआभूतेस्त्वा,
ष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोश्वि,श्याम-
श्विनौ दधीचऽआथर्व्वणाद्दध्यङ्ङाथर्वणोथर्वणोदैवादथर्व्वा
दैवोमृत्योःप्राध्वंसनान्मृत्युः प्राध्वंसनःप्रध्वंसनात्
प्राध्वंसनऽएकर्षेरेकर्षिर्विप्रजित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः
सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः पर,
मेष्ठिनः परमेष्ठी ब्रह्मणोब्रह्मस्वयंभुब्रह्मणे नमः ॥७॥ वंशो,
क्तास्रृषयस्तृप्यन्ताम् ॥३॥

इत्यञ्जलिं दत्वा पुनस्तथैव पूरयित्वा

अथ वंशः तदिदं वयंभारद्वाजीपुत्राद्भारद्वाजीपुत्रो

वात्सीमांडवीपुत्राद्वात्सीमांडवीपुत्रःपाराशरीपुत्रात्पाराशरी-पुत्रोगार्गीपुत्राद्गार्गीपुत्रः पाराशरीकौण्डनीपुत्रात् पारा-शरीकौंडनीपुत्रोगार्गीपुत्राद्गार्गीपुत्रो वाडेयीपुत्रा द्वाडेयी-पुत्रोमौषिकीपुत्रा न्मौषिकीपुत्रोहारिकर्णीपुत्राद्धारिकर्णीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रःपैङ्गीपुत्रात्पैङ्गीपुत्रःशौनकी-पुत्राच्छौनकीपुत्रः ॥१॥ काश्यपीबालाक्याठरीपुत्रात्-काश्यपीबालाक्यामाठरीपुत्रः कौत्सीपुत्रात् कौत्सीपुत्रोबौ-धीपुत्राद्बौधीपुत्रः शालङ्कायनीपुत्राच्छालङ्कायनीपुत्रोवार्ष-गणीपुत्राद्वार्षगणीपुत्रोगौतमीपुत्राद्गौतमीपुत्रोऽत्रेयीपुत्रा-दात्रेयीपुत्रोगौतमीपुत्राद्गौतमीपुत्रो वात्सीपुत्राद्वात्सीपुत्रो-भारद्वाजीपुत्राद्भारद्वाजीपुत्रःपाराशरीपुत्रात्पाराशरीपुत्रोवा-र्कारुणीपुत्राद्वार्कारुणीपुत्रऽआर्तभागीपुत्रादार्तभागीपुत्रःशौ-ङ्गीपुत्राच्छौङ्गीपुत्रः साङ्कृतीपुत्रात्साङ्कृतीपुत्रः ॥ २ ॥ आलम्बीपुत्रादालंबीपुत्रऽआयम्बायनीपुत्रादालंबायनीपुत्रो जायंतीपुत्राज्जायंतीपुत्रोमाण्डूकायनीपुत्रान्मांण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रःशांडिलीपुत्राच्छाण्डिलीपुत्रोरा-थीतरीपुत्राद्राथीतरीपुत्रः क्रौंचकीपुत्राभ्यांक्रौंचकीपुत्रौ, वेदभृतीपुत्राद्वेदभृतीपुत्रोभालुकीपुत्राद्भालुकी पुत्रःप्राचीन, योगीपुत्रात्प्राचीनयोगीपुत्रः सांजीवीपुत्रात्सांजीवीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः ॥ ३ ॥ प्राश्नीपुत्रादासु रिवासिनःप्राश्नीपुत्रऽआसुरायणायदासुरायणऽआसुरेरासु,

रियाज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुणा-ऽउपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वाव-तोवाध्योगाज्जिह्वावान्वाध्योगोऽसिताद्वार्षगणादसितो वा-र्षगणोहरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपा-च्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपोनैध्रुविः र्वाचोवागम्भिण्याऽअम्भिण्यादित्यादादित्यानीमानि शुक्लानि-यजूᳬषिवाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ ४ ॥ वंशोक्ता ऋषयस्तृप्यन्ताम् ॥ इत्यञ्जलिं दत्वा पुनस्तथैव पूरयित्वा ॥

इमावेव गोतमभरद्वाजावयमेवगोतमोयंभरद्वाजऽइमा-वेव विश्वामित्रजमदग्नीअयमेवविश्वामित्रोयंजमदग्निरिमावेव-वसिष्ठकश्यपावयमेववसिष्ठोयंकश्यपोवागेवात्रिर्वाचाह्य-न्नमद्यतेत्तिर्हवैनामैतद्यदत्रिरिति सर्व्वस्यात्ताभवति सर्व्वम-स्यान्नम्भवतियएवंवेद॥१२॥ब्राह्मणोक्ता ऋषयस्तृप्यंताम् ॐ तत्सवितुरितिचतुर्वारंगायत्रीं पठेत् । इति प्रतिवंशवंशो-क्तानांऋषीणाम् तर्पणम् । ततः सर्वे ॐ विरतास्म इति सकृदुच्चैर्ब्रूयुः ।

इत्यञ्जलिं दद्यात् । अथ केवलं वेदाध्ययनम् यदि नाध्येतुं शक्नुयात् तदाऽऽचार्यमुखादधीयमानान् मन्त्रान् शृणुयादेव ते च मन्त्रा यथा—

ॐ इषेत्वोर्जेत्वावायवस्थदेवोवः सविताप्रार्पयतुश्रेष्ठ-तमाय कर्मणऽआप्यायध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरन,

मीवाऽअयचमाभावस्तेनऽईशतमाघश ठं॰ सोध्रु वाऽअस्मिन्
गोपतौस्यातवह्वीर्यजमानस्यपशून्पाहि ॥१॥ कृष्णोऽस्या-
खरेष्ठोंऽग्नयेत्वाजुष्टंप्रोंक्षामि । वेदिरसिवर्हिपेत्वाजुष्टांप्रोक्षामि
वर्हिरसिस्रुग्भ्यस्त्वाजुष्टंप्रोक्षामि ॥२॥ समिधाग्निंदुवस्यत-
घृतैर्बोधयतातिथिम् ॥ आस्मिन्हव्याजुहोतन ॥ ३ ॥
एदमगन्मदेवयजनंपृथिव्यायत्रदेवासोऽअजुषन्तविश्वे ऋक्सा-
माभ्याथंसन्तरन्तोयजुर्भीरायस्पोषेणसमिषामदेम । इमाऽ
आपःशमुमेसन्तुदेवीरोषधेत्रायस्वस्वधितेमैनठं॰हिठं॰सीः॥४॥
अग्नेस्तनूरसिव्विष्णवेत्वा सोमस्यतनूरसिव्विष्णवेत्वातिथे
रातिथ्यमसिव्विष्णवेत्वा श्येनायत्वासोमभृतेविष्णवेत्वाग्न
येत्वारायस्पोषदेविष्णवेत्वा ॥५॥ देवस्यत्वासवितुःप्रसवेऽ-
श्विनोर्वाहुभ्यांपूष्णोहस्ताभ्याम् ॥ आददेनार्यसीदमहठं॰
रक्षसांग्रीवाऽअपिकृन्तामियवोसियवयस्मद्द्वेषोयवयाराती
र्दिवेत्वान्तरिक्षायत्वापृथिव्यैत्वाशुन्धन्तांलोकाःपितृषदनाः
पितृषदनमसि॥६॥वाचस्पतयेपवस्ववृष्णोऽअठं॰शुभ्यांगभस्ति
पूतः देवोदेवेभ्यःपवस्वयेषांभागोऽसि ॥ ७ ॥ उप
यामगृहीतोऽसिआदित्येभ्यस्त्वाविष्णऽउरुगायैषतेसोमस्तठं॰
रक्षस्वमात्वादभन् ॥ ८ ॥ देवसवितःप्रसुवयज्ञं प्रसुवयज्ञ
पतिंभगायदिव्योगंधर्वःकेतपूःकेतंनःपुनातुवाचस्पतिर्वाचंनः
स्वदतुस्वाहा ॥ ६ ॥ अपोदेवामधुमतीरगृभ्णन्नूर्जस्वती
राजस्वंश्चितानाः ॥ याभिर्मित्रावरुणावभ्यषिंचन्याभिरि

न्द्रमनयन्नत्यरातीः ॥ १० ॥ युञ्जानःप्रथमंमनस्तत्त्वाय-
सविताधियठं॰ अग्नेर्ज्योतिर्निचाय्यपृथिव्याऽअध्याभरत्॥११
दृशानोरुक्मऽउर्व्या व्यद्यौदुर्मर्षमायुः श्रियेरुचानःअग्निर
मृतोऽअभवद्वयोभिर्यतेनं द्यौरजनयत्सुरेताः ॥ १२ । नयि
गृह्णाम्यग्रेऽअग्निठं॰रायस्पोषायसुप्र जास्त्वाय सुवीर्यायमामुदे
वताःसचंताम् ॥१३॥ ध्रुवचितिध्रु वयोनिध्रु वासिध्रु वंयो
निमासीदसाधुया ॥ उख्यस्यकेतुं प्रथमंजुषाणाश्विनाध्वर्यू
सादयताःमिहत्वा ॥१४॥ अग्नेजातान्प्रणुदानःसपत्नान्
प्रत्यजातान्नुद जातवेदः॥अधिनोब्रूहिसुमनाऽअहेडँस्तवस्याम
शर्मठं॰त्रिवरुथउद्भौ ॥ १५ ॥ नमस्तेरुद्रमन्यवउतोतऽ
इषवेनमः ॥ बाहुभ्यामुततेनमः ॥ १६ ॥ अश्मन्नूर्जंपर्वते
शिश्रियाणामद्भ्यऽओषधीभ्योवनस्पतिभ्योअऽधिसम्भृतंपयः
ताब्रऽइषमूर्जंधत्तमरुतःसठं॰ रराणाऽअश्मंस्तेक्षुन्—मयित
ऊर्ग्यद्विष्मस्तंतेशुगृच्छतु ॥१७॥ वाजश्चमप्रसवश्चमेप्रय
तिश्चमेप्रसितिश्चमेधीतिश्चमेक्रतुश्चमे स्वरश्चमेश्लोक
श्चमे श्रवश्चमे श्रुतिश्चमेज्योतिश्चमेस्वश्चमेयज्ञेनकल्पताम्
॥ १८ ॥स्वाद्वीन्त्वास्वादुनातीव्रांतीव्रेणामृताममृतेन॥मधु
मतीम्मधुमतासृजामिसठं॰सोमेनसोमोस्यश्विभ्यांपच्यस्वसर
स्वत्यैपच्यस्वेन्द्रायसूत्राम्णेपच्यस्व ॥ १९ ॥ क्षत्रस्य
योनिरसिक्षत्रस्यनाभिरसिमात्वाहिठं॰सीन्मामाहिठं॰सीः॥२०
इमंमेवरुण श्रुधीहवमद्याचमृडय त्वामवस्युराचके ॥२१॥

तेजोऽसिशुक्रममृतमायुष्पाऽआयुर्मेपाहि ॥ देवस्यत्वासवितुः प्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामाददे ॥ २२ ॥ हिरण्यगर्भः समवर्त्ततागे्र भूतस्यजातःपतिरेकऽआसीत् ॥सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ २३ ॥ अश्वस्तूपरोगोमृगस्तेप्राजापत्याः ॥ कृष्णग्रीवऽआग्नेयोरराटेपुरस्तात्सारस्वतीमेष्यधस्ताद्धन्वोराश्विनावधोरामौ ॥ वाह्वोःसौमापौष्णःश्यामोनाभ्याᳬसौर्ययामौश्वेतश्चकृष्णश्च पार्श्वयोस्त्वाष्ट्रौलोमशसक्थौसक्थ्योर्वायव्यः श्वेतःपुच्छऽइन्द्रायस्वपस्यायवेहद्वैष्णवोवामनः ॥ २४ ॥ शादंदद्भिरवकांदन्तमूलैर्मृदंवर्स्वैस्तेगान्दर्ठ०ष्ट्राभ्याᳬसरस्वत्याऽअग्रजिह्वंजिह्वायाउत्सादमवक्रन्देनतालुवाजᳬहनुभ्यामपऽआस्येनवृषणमाण्डाभ्यामादित्यांश्मश्रुभिःपंथानम्भ्रूभ्यांद्यावापृथिवीवर्तोभ्यांविद्युतंकनीनकाभ्याᳬशुक्लायस्वाहाकृष्णायस्वाहापार्याणिपक्ष्माण्यवार्याऽइक्षवोऽवार्याणिपक्ष्माणिपार्याऽइक्षवः ॥ २५ ॥ अग्निश्चपृथिवीचसन्नतेतेमेसन्नमतामदोवायुश्चांतरिक्षंचसन्नतेतेमेसन्नमतामदऽआदित्यश्चद्यौश्चसन्नतेतेमेसन्नमतामदऽआपश्चवरुणश्चसन्नतेतेमेसन्नमतामदः ॥ सप्तसᳬसदोऽअष्टमीभूतसाधनी॥सकामाँ२ऽअध्वनस्कुरुसंज्ञानमस्तुमेऽमुना ॥२६॥ समास्त्वाग्नऽऋतवोवर्धयन्तुसंवत्सराऽऋषयोयानिसत्या ॥ संदिव्येनदीदिहिरोचनेनविश्वाऽआभाहिप्रदिशश्चतस्रः ॥ २७ ॥ होतायक्षत्समिधेन्द्रमिडस्पदेनाभापृथिव्याऽअधि । दिवोवर्ष्मन्त्समिध्य

तऽस्रोजिष्ठश्चर्षणीसहावेत्वाज्यस्यहोतर्यज ॥ २८ ॥ समि-
द्धोऽअञ्जनकृदरंमतीनांघृतमग्नेमधुमत्पिन्वमानः॥वाजीव-
हन्वाजिनंजातवेदोदेवानांवक्षिप्रियमासधस्थम् ॥ २९ ॥
देवसवितः प्रसुवयज्ञं प्रसुवयज्ञपतिंभगाय दिव्योगंधर्वःकेतपूः-
केतन्नःपुनातुवाचस्पतिर्वाचन्नः स्वदतु ॥ ३० ॥ सहस्रशी-
र्षापुरुषः सहस्राक्षःसहस्रपात् ॥ सभूमिᳬ सर्वतस्पृत्वात्यति
ष्ठद्दशाङ्गुलम् ॥ ३१ ॥ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु-
चंद्रमाः ॥ तदेवशुक्रंतद्ब्रह्मताऽआपःसप्रजापतिः॥३२।
अस्याजरासोदमामरित्राऽअर्च्चद्धमासोऽअग्नयः पावकाः।
श्वितीचयःश्वात्रासोभुरण्यवोवनर्षदोवायवोनसोमाः।३३।
यज्जाग्रतोदूरमुदैतिदैवंतदुसुप्तस्यतथैवैति ॥ दूरङ्गमञ्ज्योति-
षांज्योतिरेकंतन्मेमनः शिवसंकल्पमस्तु ॥ ३४ ॥ अपेतो-
यंतुपणयोऽसुम्नादेवपीयवः।अस्यलोकःसुतावतः।द्युभिर-
होभिरक्तुभिर्व्यक्तंयमोददात्ववसानमस्मै ॥३५॥ ऋचंवाचं
प्रपद्ये मनो यजुः प्रपद्ये साम प्राणं प्रपद्ये चक्षुः श्रोत्रं
प्रपद्ये । वागोजः सहौजोमयि प्राणापानौ ।३६। देव-
स्यत्वासवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम्।
आददेनारिरसि ॥ ३७ ॥ देवस्यत्वासवितुः प्रसवेश्वि-
नोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ आददेऽदित्यैरास्नासि।३८
स्वाहाप्राणेभ्यःसाधिपतिकेभ्यः। पृथिव्यै स्वाहाऽअग्नयेस्वाहा
ऽअन्तरिक्षायस्वाहा। वायवेस्वाहादिवेस्वाहासूर्यायस्वाहा
॥ ३९ ॥ ईशावास्यमिदᳬ सर्वं यत्किंचिज्जगत्यांजगत्

येनत्पक्केनमुं जीथामागृधः कस्यस्विद्धनम् ॥ ४० ॥ योंसा-
चादित्ये हिरण्मयेन पात्रेण सत्यस्यापि हितं मुखम् ॥
पुरुषः सोऽसावहम् ॥ ४१ ॥ ॐ खं ब्रह्म । अध्यायोक्का-
न्यपयस्त्वन्यन्ताम् ॥ इति पठित्वा पुनः पठेत् शृणुयाद्वा ॥
ॐ इषेत्वोर्जेत्वा वायवस्थदेवोवः सविताप्रार्पयतुश्रेष्ठ
तमाय कर्मणऽआप्यायद्ध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरन-
मीवा अयक्ष्मामावस्तेनऽईशतमाघशठं०सोंध्रु वाऽअस्मिन्गों-
पतौ स्यात वह्वीर्यजमानस्य पशून् पाहि ॥ १ ॥ परि ते
धन्वनो हेतिरस्मान्वृणक्तुविश्वतः । अथोयऽइषुधिस्तवारे
अस्मन्निधेहितम् १६ । १२ ॥ २ ॥ अग्नेनयसुपथारायेऽ-
ऽअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहु-
राणमेनोभूयिष्ठां ते नमऽउक्तिं विधेम ५ । ६६ ॥ ३ उप-
यामगृहीतोसिसुशर्मासिप्रतिष्ठानोबृहदुक्षायनमः ॥ विश्वे
भ्यस्त्वादेवेभ्यऽएषतेयोनिर्विश्वेभ्यस्त्वादेवेभ्यः ८।८॥ ४ ॥
सोमस्यत्विषिरसितवेवमेत्विषिर्भूयात् ॥ मृत्योःपाह्योजों-
सिसहोस्यमृतमसि १२ । १ । ५ । परस्याऽअधिसंवतो-
वराँ २ ऽअभ्यातर । यत्राहमस्मि ताँ २ ऽअव ११। ७१।
॥६॥ अन्न्यावोऽअन्न्यामवत्वन्न्यान्यस्यऽउपावत ॥ ताः
सर्व्वाः संविदानाऽइदंमेप्रावताव्वचः १२ ॥ ८८ ॥ ७ ॥
राज्ञ्यसिप्राचीदिग्विराडसिदक्षिणादिक्सम्राडसि प्रतीची-
दिक्स्वराडस्युदीचीदिगधिपत्न्यसिबृहतीदिक् १४।१३॥८॥
नमोहिरण्यबाहवेसेनान्येदिशांचपतये नमोनमोवृक्षेभ्योहरि-

केशेभ्यः पशूनांपतयेनमोनमः शष्पिंजरायत्विषीमतेपथीनाम्पतयेनमोनमोहरिकेशायोपवीतने पुष्टानां पतयेनमोनमोबभ्लुशाय १६ । १७ ॥ ९ ॥ इंद्रेमंप्रतरांनयसजातानामसद्वशी ॥ समेनंवर्चसासृजदेवानां भागदाऽअसत् १७।५१ ॥१०॥ इमौतेपक्षावजरौपतत्रिणौयाभ्यां थं रक्षा थं स्यपह ठं० स्यग्ने॥ताभ्यांपतेमसुकृतामुलोकंयत्रऽऋषयोजग्मुःप्रथमजाःपुराणाः १८ । ५२ ॥ ११ । अन्नात्परिस्रु तोरसंब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः ॥ ऋतेन सत्यमिन्द्रियंविपानठं० शुक्रमन्धसऽइन्द्रस्येन्द्रियमिदं पयोमृतं मधु १९ । ७५ ॥ १२ ॥ अश्विनातेजसाचक्षुः प्राणेन सरस्वती वीर्यम् ॥ वाचेंद्रोबलेनेन्द्रायदधुरिन्द्रियम् २० । ८० ॥ १३ ॥ पृथिव्यैस्वाहान्तरिक्षायस्वाहादिवेस्वाहासूर्यायस्वाहा चन्द्रायस्वाहानक्षत्रेभ्यःस्वाहौषधीभ्यः स्वाहा वनस्पतिभ्यः स्वाहा परिप्लवेभ्यः स्वाहा चराचरेभ्यःस्वाहासरीसृपेभ्यःस्वाहा २२ । २९ ॥ १४ ॥ प्रजापतयेचवायवेचगोमृगोवरुणायारण्योमेषोयमायकृष्णोमनुष्यराजायमर्कटः ॥ शार्दूलायरोहिदृषभायगवयीक्षिप्रश्येनायवर्तिकानीलङ्गोः क्रिमिः समुद्रायशिशुमारोहिमवतेहस्ती २४।३०।१५ तेऽअस्ययोषणेदिव्येनयोनाउषासानक्ता ॥ इमंयज्ञमवतामध्वरंनः २७ । १७ । १६ । तनूनपात्पथऽऋतस्ययानान्मध्वासमञ्जन्त्स्वदयासुजिह्व ॥ मन्मानिधीभिरुतयज्ञमृन्धन्देवत्राचकृणुह्यध्वरंनः २९ ॥ २६ ॥ १७ ॥

अयमिहप्रथमोधायिधातृभिर्होतायजिष्ठोऽअध्वरेष्वीड्यः ॥ यमप्नवानोभृगवोविरुरुचुर्वनेषुचित्रं विभ्वंविशेविशे ३२ ॥ ६ ॥ १८ ॥ अनुनोऽद्यानुमतिर्यज्ञं देवेषुमन्यताम् । अग्निश्चहव्यवाहनोभवतंदाशुषेमयः ॥ १९ ॥ इयत्यग्रऽआसीन्मखस्यतेद्यशिरोराध्यासंदेवयजनेपृथिव्याः ॥ मखायत्वामखस्यत्वाशीर्ष्णे ३७ ॥ ५ ॥ २० ॥

इत्येवं पठित्वा पुनस्तथैव पठेत् । अथ कण्डिकाः ।

व्रतमुपैष्यम् ॥१॥ सवैकपालान्यवान्यतेरऽउपद्धाति ॥२॥ सवैस्तु चःसंमार्ष्टि ॥ ३ ॥ इडकृत्यान्नाह ॥ ४ ॥ सधैप्रवरायाश्रावयति ॥ ५ ॥ ऋतवोहवैदेवेषु यज्ञ भागमीषिरे ॥ ६ ॥ सन्वैपर्णशाखयाव्त्सानपाकरोति ॥ ७ ॥ मन्वेहवैप्रातः ॥८॥ सयत्राह ॥९॥ ससयद्वाइतश्चेतरश्च संभरन्ति ॥१०॥ उद्धृत्याहवनीयम्पूर्णाहुतिंजुहोति॥११॥ सूर्योहवाऽअग्निहोत्रम् ॥१२॥ अथहुतेऽग्निहोत्रऽउपतिष्ठते ॥१३॥ प्रजापतिर्हवाऽइदमग्रऽएकऽएवास ॥१४॥ पितामहाहत्रिपाहवैदेवाव्त्रत्रञ्जघ्नुः ॥ १५ ॥ देवयजनं जोषयन्ते ॥१६॥ दक्षिणेनाहवनीयं प्राचीनग्रीवेकृष्णाजिनेऽउपस्तृणाति ॥ १७ ॥ ससपदान्यनुनिष्क्रामति ॥ १८ ॥ शिरोवैयज्ञस्यातिथ्यंबाहूप्रायणीयोदयनीयौ ॥ १९ ॥ तद्यएषपूर्वार्धोन्नर्षिष्ठस्थूणाराजोभवति ॥ २० ॥ उदरमेवास्यसदः ॥ २१ ॥ अभ्रिमादत्ते ॥ २२ ॥ तद्यत्रैतत्प्रवृत्तोहोताहोतृषदनऽउपविशति ॥२३॥ प्रजापतिर्वैप्रजाः ससृजानो-

रिरिचानऽइवामन्यत ॥२४॥ प्राणोहवाऽअस्योपा० शुः ॥२५॥ चक्षुषीहवाऽअस्यशुक्रामन्थिनौ ॥ २६ ॥ भक्षयित्वासमुपहूताः स्मऽइत्युत्वोंपतिष्ठति ॥ २७ ॥ मनोहवाऽअस्यसविता ॥ २८ ॥ आदित्येनचरुणोदयनीयेनप्रचरति ॥ २९ ॥ प्रजापतिर्व्वाऽएषयदं० शुः ॥३० ॥ देवाश्चवाअसुराश्च ॥३१॥ अथस्नुवआज्यविलापनींचादाय ॥३२॥ अरण्योरग्नीसमारोह्य ॥३३॥ क्लेशवस्यपुरुषस्य ॥ ३४ ॥ आग्नेयोष्टाकपालः पुरोडाशोमवति ॥३५॥ असद्वाऽइदमग्रऽआसीत् ॥३६॥प्रजापतिरग्निरूपाण्यस्पप्यारयत् ॥३७॥ द्वितीयम् । एतद्धैदेवाऽअब्रुवन् ॥३८॥ अथैनमतःखनत्येव ॥ ३९ ॥ पर्णकषायनिष्पक्वाऽएताऽआपोभवन्ति ॥ ४० ॥ भूयाँ० सिहवी० षिमवन्ति ॥४१॥ रुक्मम्प्रतिमुच्यविभर्त्ति ॥ ४२ ॥ व्वनीवाह्येताग्निचिअदित्याहुः ॥ ४३ ॥ गार्हपत्यंचेष्यन्पलाशशाखयाव्युदूहति ॥४४॥ अथावोनैर्ऋतिरहरन्ति ॥ ४५॥ चितोगार्हपत्योमवति ॥४६॥ आत्मन्यग्निगृह्णीतेचेष्यन् ॥ ४७ ॥ कूर्म्मंमुपदधाति ॥ ४८ ॥ प्राणभृतउपदधाति ॥४९॥द्वितीयांचितिमुपदधाति ॥५०॥ तृतीयांचितिमुपधाति ॥ ५१ ॥ चतुर्थींचितिमुपदधाति ॥५२॥ पंचमींचितिमुपदधाति ॥ ५३ ॥ नाकसदऽउपदधाति ॥ ५४ ॥ ऋतव्याउपदधाति ॥ ५५ ॥ अथातःशतरुद्रियंजुहोति ॥५६॥ उपवसथीवेहन्प्रातरुदितऽआदित्ये ॥५७ अथातोवैश्वानरंजुहोति ॥ ५८ ॥ अथातोराष्ट्रभृतोजुहोति

॥५९॥ अथातःपयोव्रततायै ॥६०॥ अग्निरेषपुरस्ताच्चीयते ॥६१॥ प्रजापतिःस्वर्गल्लोकमजिगाᳪं सत् ॥ ६२ ॥ प्राणोगायत्री ॥६३॥ प्रजापतिंविस्रस्तम् ॥६४॥ तस्यवाऽएतस्याग्नेः ॥६५॥ अथहैतेरुणे ॥ ६६ ॥ संवत्सरोवैयज्ञः प्रजापतिः ॥ ६७ ॥ त्रिर्हवैपुरुषोजायते ॥ ६८ ॥ व्वाग्घवाऽएतस्याग्निहोत्रस्याग्निहोत्री ॥६९॥ उद्दालकोंह्यारुणिः ॥७०॥ उर्वशीहाप्सराः ॥७१॥ भृगुर्हव्वैवारुणिः ॥ ७२ ॥ पशुबंधेनयजते ॥ ७३ ॥ तद्यथाहवै ॥ ७४ ॥ अयं वैयज्ञोयोयंपवते ॥७५॥ समुद्रंवाऽएते प्रतरन्ति॥७६॥ यद्वाल्लाके ॥७७॥ दीर्घसत्रठँ हवाऽएतऽउपयन्ति ॥७८॥ तदाहुर्यदेपद्दीर्घसत्री ॥७९॥ सोमोवै राजायज्ञःप्रजापतिः। ॥ ८० ॥ व्विश्वरूपंवैत्वाष्ट्रमिंद्रोहन् ॥ ८१ ॥ इन्द्रस्यवैयत्र ॥ ८२ ॥ एतस्माद्वैयज्ञात्पुरुषो जायते ॥ ८३ ॥ ब्रह्मौदनंपचति ॥ ८४ ॥ प्रजापतिर्देवेभ्योयज्ञान्व्यादिशत् ॥ ८५ ॥ प्रजापतेरक्ष्यश्वयत् ॥ ८६ ॥ उत्तमंप्रजापतिरकामयत ॥८७॥ अथप्रातर्गोतमस्य ॥ ८८ ॥ पुरुषोंहनारायणोंऽकामयत ॥ ८९ ॥ ब्रह्मवैस्वयंभुतपोतप्यत ॥९०॥ अथास्मैश्मशानंकुर्वन्तिद्यौः शान्तिः ॥९१॥ देवाहवैसत्रंनिषेदुः ॥९२॥ अथातोरौहिणौजुहोति ॥९३॥ सर्वैतृतीयेहन् ॥९४॥ प्रवर्ग्यः द्वयाहप्राजापत्याः ॥९५॥ दृप्तवालाकिर्हानूचानोगार्ग्यऽआस॥९६॥ जनकोहव्वैदेहः ॥९७॥ जनकठँ० हवैदेहंयाज्ञवल्क्योजगाम॥९८॥ पूर्णमदःपूर्णमिदम् ॥९९॥

श्वेतकेतुर्हवाऽआरुणेयः॥१००॥प्राश्नीपुत्रा दासुरिर्वासिनः॥ चतुर्दशकाण्डेष्वध्यायोक्ता ऋषयस्तृप्यन्ताम् ।

इति पठित्वा जलं क्षिपेत् पुनः पूर्ववत् पठेत् ॥

अथ ब्राह्मण प्रपाठकाःव्रतमुपैष्यन् ॥१॥ चतुर्द्धाविहितोहवाऽअग्नेग्निरास ॥ २ ॥ देवाऽआर्द्राःस्युः ॥ ३ ॥ सस्रुचोत्तरमाघारमाघारयिष्यन् ॥४॥ यज्ञेनवैदेवाः ॥ ५॥ यज्ञेनवैदेवा दिवमुपोदक्रामन् ॥ ६ ॥ सवैस्रुचौव्यूहति ॥ ७ । १ ॥ सयद्वाइतश्चेतश्चसंभरति॥१॥ त्वष्टुर्होइन्द्राण्यकामऽआदधे ॥२॥ यत्रवैप्रजापतिः प्रजाः ससृजे ॥३॥ प्रजापतिर्हवाऽएतेनाग्रयज्ञेनेजे ॥४॥ महाहविषाहवैदेवाव्वृत्रंजघ्नुः॥५।२॥ देवयजनंजोषयन्ते ॥१॥ वाचंयच्छति ॥२॥ नीडे कृष्णाजिनमास्तृणाति ॥ ३ ॥ तद्यएषपूर्वोर्ध्योव्वर्षिष्ठा स्थूणाराजोभवति ॥ ४ ॥ व्विजामानोहैवास्यधिष्ण्याः ॥५॥ पाशंकृत्वाप्रतिमुञ्चति ॥६॥ प्राणोहवा अस्योपा ऽंशुः ॥१॥ आत्माहवाअस्याग्रयणः ॥ २ ॥ घ्नंतिवाऽएतद्यज्ञम् ॥३॥ सवाऽअवभृथमभ्यवैति ॥४॥ तद्यत्रैतद्द्वादशाहेनव्यूढच्छंदसायजते । ५ ॥ देवाश्चवाऽअसुराश्च ॥ १ ॥ वार्हस्पत्यनचरुणाप्रचरति ॥ २ ॥ सवाअपःसंभरति ॥ ३ ॥ मैत्रावरुण्यापयस्ययाप्रचरति ॥ ४।५ ॥ असद्वाऽइदमग्रऽआसीत् ॥१॥ प्रजापत्यंचरकाआलभन्ते ॥ २ ॥ प्रदीप्ताऽएतेग्नयोभवन्ति ॥ ३ ॥ तस्याऽएतस्याऽअपाढांपूर्वांकरोति ॥४॥ रुक्मंप्रतिमुच्य

विंशतिं ॥ ५ ।६॥ गार्हपत्यंचेष्यन्पलाशशाखयाव्युदूहति ॥ १ ॥ अथदर्भस्तंबमुपदधाति ॥ २ ॥ आत्मन्नग्निं गृह्णीतेचेष्यन् ॥ ३ ॥ कूर्ममुपदधाति ॥ ४ । ७ ॥ प्राणभृतउपदधाति ॥ १ ॥ अथविश्वज्योतिषमुपदधाति ॥ २ ॥ अथातोन्वाहृतम् ॥ ३ ॥ गार्हपत्यमुपदधाति ॥४।८॥ अथातःशतरुद्रियंजुहोति ॥ १ ॥ प्रत्येत्याग्निं प्रहरिष्यन् ॥ २ ॥ अथैतान् यज्ञक्रतूञ्जुहोति ॥ ३ ॥ अथप्रातः प्रातरनुवाकमुपाकरिष्यन् ॥ ४ । ६ ॥ अग्निरेषपुरस्ताच्चीयते ॥ १ ॥ अथातश्चयनस्यैव ॥ २ ॥ संवत्सरोवैप्रजापतिरग्निः ॥ ३ ॥ नेववाऽइदमग्रेसदासीन्नेवसदासीत् ॥ ४।१० ॥ संवत्सरोवैयज्ञःप्रजापतिः ॥१॥ अपिहवाएतर्हि ॥ २ ॥ प्रजापतिर्वैप्रजाःसृजमानोऽतप्यत ॥३॥ अथातःस्वाध्यायप्रशंसा॥४।११॥अयंवैयज्ञोयोयंपवते ॥ १ ॥ पुरुषꣳहनारायणंप्रजापतिरुवाच ॥ २ ॥ सोमोवैराजायज्ञः प्रजापतिः ॥ ३ ॥ प्रजापतिर्यज्ञमसृजत ॥४।१२॥ ब्रह्मौदनंपचति ॥ १ ॥ नियुक्तेषुपशुषु ॥२॥ अमुञ्च्याश्वंदक्षिणेनवेदिम् ॥ ३ ॥ पुरुषोहनारायणोकामयत ॥ ४।१३ ॥ देवाहवैसत्रन्निषेदुः ॥१॥ सयत्रैताꣳहोतान्वाह ॥ २ ॥ द्व्याहप्राजपत्याः ॥ ३ ॥ दृप्त बालाकिर्हानूचानोगार्ग्यऽआस ॥६५॥ अथहैनंभुज्युर्लाह्यायनिः पप्रच्छ ॥३॥ जनकꣳ० हवैदेहंयाज्ञवल्क्योजगाम ॥ ४ ॥ भूमिरंतरिक्षंद्यौरिति ॥५।१४ ॥ प्राश्नीपुत्रादासुरीवासिनः

॥६८॥ इति चतुर्दशकांडे प्रपाठोंक्ता ऋषयस्तृप्यंताम् ॥
इति पठित्वा जलं निक्षिपेत् । अथ पुनस्तथैव पठेत् ।
॥ अथ शतपथ शतानानि ॥

व्रतमुपैष्यन् ॥ १ ॥ तद्यदेवंविनष्टि ॥२॥ अथाज्य-
लिप्ताभ्यांपवित्राभ्याम् ॥३॥ बृहच्छोचायविष्ठय ति ॥४॥
त्वष्टुनाथं रातौस्याम ॥५॥ अग्निर्वैदेवानामद्धातमाम्॥६॥
तद्यथायोनौरेतः सिञ्चेत् ॥ ७ ॥ तांवैप्राश्नंस्येव ॥ ८ ॥
अथव्वेदंपत्नीविस्रठं० सयति ॥ ९ ॥ अयंवैयज्ञोयोयंपवते
॥१०॥ अथयदस्तमेति ॥११॥ रेवतीरमध्वमिति ॥१२॥
सवाऽआग्नेयोष्टाकपालःपुराडाशोभवति॥१३॥ तद्येसोमेने-
जानाः ॥ १४ ॥ अथोचरेणशालां परिश्रयन्ति ॥ १५ ॥
अथोल्लिखति ॥ १६ ॥सायाबभ्रुः पिङ्गाची सासोमक्रय-
णीस्यात् ॥१७॥ प्रथमंतेदेवाः ॥१८॥ इन्द्रघोषः प्रोचणी-
रध्वर्युरादत्ते ॥१९॥ साहाकद्रू रुवाच ॥२०॥ तद्यएत-
उच्छ्रितादेषाहवैयज्ञन्तन्वानाः॥२१॥ अथपार्श्वेनवासिना-
वाप्रयौति ॥ २२ ॥ सजुहोतिश्रृणोत्वग्निःसमिधाहवंमइति
॥२३॥ इयठं०हवाउपांशुः ॥ २४ ॥ तरयासावेवध्रुव-
वायुः ॥२५॥ यत्रद्यावापृथिव्यठं०शस्यते ॥२६॥ सऽआ-
ज्यस्योपस्तीर्यद्विश्चरीरवद्यति ॥ २७ ॥ इन्द्रोहवैशोडषी
॥२८॥ तासांद्वादशगर्भाः ॥ २९ ॥ द्वितीयातद्येहस्मपुरा-
व्वाजपेयेनयजते ॥ ३० ॥ अथदिशोनुवीच्यगाथोजपति
॥३१॥ सवैदीक्षते ॥३२॥ अथैतमभिषेकंकृष्णविषाणयादा-

नुविसृष्टे ॥ ३३ ॥ पडेर्वोत्तरेचरवः ॥ ३४ ॥ अथोऽद्धः
प्रजापतिरेवविस्रस्तः ॥३५॥ अमावास्यायांदीक्षते ॥३६॥
अश्वस्यपदेजुहोति ॥ ३७ ॥ अथैनांधूपयति ॥ ३८ ॥
वह्मुपरिनाभिविमर्वि ॥ ३६ ॥ अथोखामिवपति ॥ ४० ॥
द्वितीयाचतस्रःसीतायजुपाकृपति॥४१॥तंप्रत्यंचंयन्तम्॥४२॥
अपाङ्गभत्सीदेति॥४३॥तस्यमनोन्वैश्वकर्मणमिति ॥४४॥
तद्यैपामध्यमास्वयमातृणा ॥ ४५ ॥ एकादशभिरस्तुव-
तेति ॥४६॥ तावाऽएतादशेष्टकाऽउपदधाति ॥४७॥ अथ-
स्वयंतृणामुपदधाति ॥ ४८ ॥ अथोत्तरार्द्धेनप्राक् ॥ ४६ ॥
सयःसव्वैश्वानर इमेसलोकाः ॥ ५० ॥ यास्तेऽअग्नेसूर्ये-
रुचः ॥५१॥ नामकृत्त्वाथैन मुपतिष्ठते ॥ ५२ ॥ यावा-
ऽइयंवेदिःसप्तविघस्य ॥ ५३ ॥ अयमेवाकाशोजूः ॥५४॥
सौयमात्मात्रेधाविहितऽएव ॥५५॥ अथवर्ठ०शः ॥५६॥
अथयामेतामाहुतिंजुहोति ॥ ५७ ॥ अथयदनुवाक्यामनू-
च्य ॥ ५८ ॥ ब्रह्मचार्यसीत्याह ॥ ५६ ॥ सयत्पशुबन्धे-
नयजतेऽग्नीनेवैतत्पुनर्नवाकुरुते ॥६१॥ दशेतिहोवाच॥६१॥
अथयत्रस्कन्नर्ठ० स्यात् ॥६२॥ अथयदि प्रप्लुतः ॥६३॥
सर्वऽआश्विनाभवन्ति ॥६४॥ प्रजापतिर्यज्ञमसृत् ॥६५॥
किंवावपनंमहदिति ॥ ६६ ॥ अथयोस्यनिष्कः प्रतिमुक्तो
भवति ॥ ६७ ॥ एतेनहेन्द्रोतोदेवापःशौनः ॥ ६८ ॥
चतस्रः सीतायजुपाकृपति ॥ ६६ ॥ अथोत्तरतः सिकता-
उपकीर्णाभवन्ति ॥ ७० ॥ अथरौहिणौजुहोति ॥ ७१ ॥

तेदेवाअब्रुवंस्तावद्वाऽइदठं॰ सर्वंयन्तम् ॥७२॥ तानिय-दागृह्णाति ॥ ७३ ॥ योग्नौतिष्ठन् ॥ ७४ ॥ कतमऽआ-त्मेति ॥ ७५ ॥ अथहैनंमनुष्याऊचुः ॥७६॥ अथयामि-च्छेद्गर्भन्दधीतेति॥७७॥इति सप्तसहस्रपट्शतशोपंचतुर्त्रिंठ॰ शतिः ॥ ७८ ॥ प्राश्नीपुत्रादासुरीवासिनः ॥ ७९ ॥ इति चतुर्दशकाण्डे शतोक्ता ऋषयस्तृप्यन्ताम् ॥

इति पठित्वा जलं निक्षिपेत पुनः तथैव जलाञ्जलिं गृहीत्वा अपठेत् ।

अथ व्रतं विसृजते ॥ १ ॥ सयस्मिन्हर्ताम्मुंल्लोक-मेति ॥ २॥ अथनिग्राभ्याभ्योंग्रहान्विगृह्णते ॥ ३ ॥ अथ गृहपतिः सुब्रह्मण्यामाह्वयति ॥ ४ ॥ तावाऽएताः ॥५॥ तानिदशभवन्ति ॥६॥ ताऽएताऽअंङ्गुलयः ॥७॥ मध्य-मेवतृतीयाचितिः॥८॥ सहोवाच॥९॥ अथन्वठं॰शः ॥१०॥ तस्माऽउतदुवाच ॥११॥ सवाऽएषऽआत्मैवयत्सौत्रामणिः ॥१२॥ मर्यादायाऽएवलोष्टमाहरेय ॥ १३ ॥ प्राश्वीपुत्रा-दासुरीवासिनः ॥१४॥ इति—अंत्यकण्डिकोक्ताऋषयस्तृ-प्यंताम् ॥ इति पठित्वा जलं निक्षिपेत् पुनस्तथैव पठेत् ।

एवंव्रतं विसृजेत् ॥ १ ॥ परमांगतिङ्गच्छतीति ॥२॥ तस्माद्धोतृचमसात ॥३॥ तस्मिन्सम्रुपहवमिष्ट्वासमिधोभ्या-दधाति ॥ ४ ॥ द्वादशवात्रयोदशवादक्षिणाभवन्ति ॥५॥ यावानग्निर्यावंत्यस्यमात्रातावद्भवति ॥ ६ ॥ तस्मात्समान-सम्बंधनाः ॥७॥ तस्मादिमेप्राणाऽउपरिष्टादसंक्षताः ॥८॥

संवादेनैवर्त्त्विजोंलोकाऽइति ॥ ९ ॥ ब्रह्मणोब्रह्मस्वयंभुब्रह्म-
णेनमः॥ १०॥ कैशिनीरेवेमाऽआप्येतर्हिप्रजाजायंते ॥ ११॥
तस्मादिमावात्मानमभितोबाहू॥ १२॥ तस्मादुहैतज्जीवाश्च
पितरश्चनसंदृश्यन्ते ॥ १३॥ वाजसनेयेनयाज्ञवल्क्येनाख्या-
यन्ते ॥ १४॥ अन्त्यपंक्तिकोक्ताऋषयस्तृप्यन्ताम् ॥

इति पठित्वा जलं निक्षिपेत् पुनर्जलं गृहीत्वा पठेत्

ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम् ॥ होतारं रत्नधातमम् ॥ १ ॥ इषेत्वोर्जेत्वा वायवस्थदेवोवः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणऽआप्यायद्ध्वमघ्न्या-ऽइन्द्राय भागं प्रजावतीरनमीवाऽअयक्ष्मा मावस्तेनऽईश-तमाघशंठ॰ सोध्रुवाऽअस्मिन् गोपतौ स्यात बह्वीर्यजमान-स्यपशून् पाहि ॥ २ ॥ अग्नऽआयाहिवीतयेगृणानोहव्य-दातये ॥ निहोतासत्सिबर्हिषि ॥ ३ ॥ शन्नोदेवीरभिष्टयऽ-आपोभवन्तु पीतये शंयोरभिस्रवन्तुनः ॥४॥

इति पठेत् ततः शिरसा नमन् स पुष्पाणि साञ्जलिः ।

ॐ तदेतदृचाभ्युक्तंनमृषाश्रांतंयदवंति देवाऽइतिनहैवंवि-दुषःकिंचनमृषाश्रान्तंभवतितथोहास्यैतत्सर्वेदेवाऽअवन्ति ।१।

इति पठित्वा नमस्कारं कुर्यात् । ततः--सद्रव्याक्षतं जलमादाय ।

॥ अथ ऋषि श्राद्धम् ॥

ॐ तत्सत् ३ अद्य तस्य ब्रह्मणो द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे आर्यावर्त्तेऽमुकदेशे श्रीविक्रमादित्यराज्यतः अमुकसंख्याकेऽमुकनाम्निसंवत्सरे

दक्षिणायने वर्षर्तौश्रावणमासे पूर्णिमायां तिथौ १५ अमुकवासरे अमुकगोत्रोऽमुकशर्म्मा (वर्म्मा, गुप्तो) ऽहम् उत्सर्गाङ्गभूत-मृषिश्राद्धमहं करिष्ये ॥ इदं विष्णुरितिमंत्रेण दिग्बन्धनम्॥

इति संकल्प्य ब्राह्मणेभ्यो देयानिवस्तूनि कुशजलेनाभिषिञ्चन् ।

ऋषिश्राद्धस्योपहाराः शुचयोभवन्तु ।

इति पठेत् । ततोऽक्षतादिना देयवस्तूनि निर्दिशन् ।

देशकालपात्रसंपदस्तु ॐअरुन्धती सहितानां कश्यपादि ऋषीणामिद मासनंयथायथाविभागंवःस्वाहानमः ॥ अरुन्धतीसहितकश्यपाद्य ऋषयः यथादत्तंगंधाद्यर्चनंयथायथा-विभागं वः स्वाहा नमः ॥ इति गंधादि दानम् ॥

ततः—यथाशक्ति ब्राह्मणानां भोज्यादिदानेन तृप्तकर्त्तव्य-तामुद्दिश्य ।

ऋषिश्राद्धसांगतासिद्ध्यर्थं सप्तसंख्याकान् ( यथा संख्याकं ब्राह्मणं ) ब्राह्मणान् यथाकालेन यथासंपन्नान्नेन तर्पयिष्ये तेन अरुंधन्तीसहितकश्यपाद्यऋषयः प्रीयन्ताम्॥

इति पठेत् । ततः आरार्तिक परिक्रमा, मंत्रपुष्पाजलिं कृत्वा आचार्यंपूजयित्वा दक्षिणादानं कुर्यात् तद् यथा ।

ऋषिश्राद्धसांगतासिद्ध्यर्थं हिरण्यनिष्क्रयभूतां दक्षिणामाचार्यायतुभ्यमहंसंप्रददे ।इति पठित्वादद्यात् ततःआचार्यः।

कोदात् कस्माऽअदात् कामोदात् कमायादात् ।
कामोदाता कामः प्रतिगृहीता कामैतत्ते ॥ १ ॥

इति पठेत् । ततः उपविष्टान् समागतान् ब्राह्मणान् देयद्रव्यै-रर्चयेत् । तत्र जलादीन्यादाय ।

ॐ शिवाआपःसंतु सौमनस्यमस्तु। अक्षतं चारिष्टं चास्तु। अघोरा ऋषयः सन्तु॥

इति यजमानः पठेत् ब्राह्मणा पुनः सन्तु इति पठेयुः। ततः उत्सर्गकर्मणिन्यूनातिरिक्तदोषपरिहाराय भूयसीं दक्षिणां दद्यात् ततः—यजमानः। उत्सर्गांगभूतंऋषिश्राद्धं परिपूर्णमस्तु।

इति पठेत्। ब्राह्मणाश्च—अस्तु परिपूर्णम् इति पठेयुः॥

ॐसहनोऽस्तुसहनोऽवतुसहनऽइंद्रंवीर्यंवदस्तुब्रह्मइन्द्रस्तद्वेदयेन यथानविद्विषामहे॥इति ॐउभाकवीपु वायी नों धर्मः परापततपरिसख्यस्यधर्मिणो व्रिसरूपानिविसृजामहे।

इति सर्वेविरताःस्मेतिब्रूयुः इति श्राद्धम् विसर्जनम् पठेयुः

ॐउत्तिष्ठब्रह्मणस्पतेदेव यन्तस्त्वेमहे॥उपप्रयन्तुमरुतः सुदानवऽइन्द्रप्राशूर्भवासचा ॥१॥ यान्तुऋषिगणाः सर्वे०

ततः अक्षतादि आदाय विसृजन् यजमानः

ॐसमुद्रङ्गच्छस्वाहान्तरिक्षङ्गच्छस्वाहादेवठं सवितारङ्गच्छस्वाहामित्रावरुणौगच्छस्वाहाहोरात्रेगच्छस्वाहा छंदाठं०सिगच्छस्वाहाद्यावापृथिवी गच्छस्वाहायज्ञङ्गच्छस्वाहासोमङ्गच्छस्वाहादिव्यम्भोगच्छस्वाहा ग्निंवैश्वानरङ्गच्छस्वाहा मनोमेहार्दियच्छदिवन्तेधूमोगच्छतु स्वर्ज्योतिःपृथिवींभस्मनापृणस्वाहा ॥ २ ॥ इति पठेत् ततः जलमक्षतांश्चादाय।

अनेनाऽथायोत्सर्गकर्माङ्गत्वेन कृतेनऋषिपूजनतर्पणादकर्मणा श्रीभगवान्परमेश्वरः प्रीयतां नमम। ॐ तत्सद्ब्रह्मार्पणमस्तु॥

इत्यर्गलपुरनिवासि श्रीविद्वद्वर्य पं० बुलाखीरामगोस्वामी तत्सूनु भू०पू० श्रीविद्याधर्म वर्द्धिनी-पाठशालायाः यजुर्वेद कर्मकांडाध्यापक,
श्रीलक्ष्मीनारायण गोस्वामिना
सङ्कलिता तथा घनश्याम गोस्वामिना सम्पादिता यजुर्वेदिनां कृते [उपाकर्मपद्धतिः समाप्ता ।
शुभम्भूयात् ।
इति उपाकर्म पद्धतिः समाप्ता ।

---

## पुरश्चरण ( मन्त्र सिद्धि ) करने के लिये विधान ।

पूर्व में शिवावलि के द्वारा जाँच करना कि अमुक काय होगा ? वा स्वप्नेश्वरी द्वारा जाने जब विश्वास हो जाय तब । ( १ ) भू शुद्धिः । ( क्षेत्र कीलन आदि ) ( २ ) भूत शुद्धिः । ( ३ ) प्राण प्रतिष्ठा (जिस देवता का प्रयोग करे) ( ४ ) अन्तर-मातृका । ( ५ ) वहिर्मातृका । ( ६ ) सृष्टि स्थिति एवं संहार न्यास ( ७ ) पंचोपासना में जिस देवता का प्रयोग हो उसके लिये कला न्यास । ( ८ ) षोढ़ान्यास । अनन्तर मन्त्र का न्यास ध्यानादि करने के उपरान्त देवता का पूजन पंचोपचार, षोड़शोपचार वा पचोपचार करने के वाद जप और हवन आदि सब करने से सिद्धि होगी परन्तु कलियुग में ब्राह्मण को चतुर्गुणा क्षत्री को पँचगुणा वैश्य को ६ गुणा लिखा है यह विधि तंत्र की है वेद के मंत्रों का विधान १२५००० है ।

---

# ❋ आवश्यक सूचना ❋



इन कार्यों में वेद के मन्त्र ह्रस्वस्वर हीन बोलना

प्रमाण "स्मार्त प्रभुः"

जपेहोमे मखेश्राद्धेऽभिषेके पितृकर्मणि ।
ह्रस्वस्वरंनकुर्वीत सन्ध्यादि देवकर्मणि ॥१॥
उपस्थाने जपेहोमे मार्जनेयज्ञकर्मणि ।
कण्ठस्वरं प्रकुर्वीत ह्रस्वस्वर विवर्जितम् ॥२॥
श्रौतोल्लासेऽपि ।
उपस्थाने जपेहोमे दाहे च यज्ञ कर्मणि ।
ह्रस्वस्वरं न कुर्वीत शेषास्तु स्वरसंयुता ॥३॥



विना मूल्य !　　विना मूल्य !!　　विना मूल्य !!!

## सन्ध्या विधिः भाषा टीका सहित ।

यह पुस्तक अत्युत्तम है। तीनों काल में गायत्री के ध्यान सहित ३ रंग के चित्र हैं और कई उपयोगी वस्तु हैं। तथा इस चतुर्थ संस्करण में कुछ मन्त्र ऐसे, जो अत्यन्त उपयोगी हैं और जिनकी समाज में बहुत आवश्यकता है, छपवा दिये हैं। मँगवाकर लाभ उठाइये।

## पञ्चरत्न गीता ।

इस पुस्तक में गीता के श्लोकों से हर प्रकार के कार्य सिद्धी के लिये प्रयोग विधान हैं। जिनके द्वारा मनुष्य हर प्रकार का लाभ उठाकर आनन्द प्राप्त करेगा। तथा विष्णु भगवान का वैदिक और पुराणोक्त पूजन विधान सविस्तर वर्णन है। अब की वार भाषा टीका भी कर दी है।

( अभी तैयार नहीं है )

## दुर्गार्चनसृतिः

इस अनुपम पुस्तक में १५ तिरंगे चित्र २ यंत्र सम्पूर्ण पूजन विधान तथा समस्त दुर्गापाठ का भाषानुवाद जो सबकी समझ में आ सके छाप दिया है। जो महानुभाव मँगवाना चाहें केवल ।।–) का टिकट पोस्टेज के लिए भेजकर विना मूल्य मँगवा सकते हैं। परन्तु ध्यान रहे वी० पी० पीं०, वैरिंग पारसल से तथा फटे फटे टिकट भेज कर न मँगवावें और अपना पता हिन्दी अँग्रेजी में साफ़ साफ़ लिख कर भेजें।

वंशीधर-प्रेमसुखदास,
तेलमिल माईथान, आगरा।